॥ अथभारतचंपौषष्ठस्तबकः प्रारभ्यते ॥ श्री ॥

श्रीगणेशायनमः॥ तदनुद्वादशवर्षवनवासससमाप्त्यनंतरंतेप्रसिद्धाःभरताः भरतवंशोत्पन्नाधर्मराजादयःनटाश्वव्यवधाश्रयान् येषांनराश्रयान् चरमहायन
स्यत्रयोदशवर्षस्यलंघनंयापनंकांक्षंतेइच्छंतितेनतथाभूताःसंतःअतिचिरं बहुकालंरविभांडेन रविदत्तपात्रोत्पन्नान्नेनविवर्धितान् अनुचरानिवब्राम्हणादिपरि
जनानिवतांअटवींद्वैतवनंजहुःतत्यजुःयथावेषांतरंणत्रयोदशवर्षयापयितुंब्राम्हणादीन्तत्यजुःतथाटव्यमपितत्यजुरित्यर्थः१ग॰ तदनुतदनंतरंतस्यनहुषस्य अनुचि
तंअयोग्यंयत्साहसंब्राह्मणवाहकशिबिकारोहणंतेन अधिगतंप्राप्तंवाहसाधिपस्यमहाजगरसर्पस्यवपुर्यस्यतंनहुषंएतन्नामकंराजानंऔदरदमुनसःजठराग्नेःशमनायक्षु

तदनुतेभरताव्यवधाश्रयाश्चरमहायनलंघनकांक्षिणः अतिचिरंरविभांडविवर्धितानुचरानिवतामटवीं
जहुः॥१॥ गद्यं॥ तदनुतदनुचितवचनसाहसाधिगतवाहसाधिपवपुषंनहुषमौदरदमुनःशमनायचतुर
र्णववारिकांक्षिणःपारिकांक्षिणःकोपोदितात्छापोदधेरुत्तरेरसुमुत्तार्यतस्मादेवविस्मारितनिजविधिदुर्वि
लासादासादितवराःवरारोहयातयासहदुःसहांनिजधामपिधानवैदग्ध्यमभ्यसितुकामाइवमत्स्यनगरस्या
नतिसमीपगामिनींपितृवनशमीमभजन्॥१॥
धानिवारणायेत्यर्थः चतुरर्णव वारीणिकांक्षतेसोतस्यपारिकांक्षिणःअगस्त्यमुनेः
कोपेनउदितात् उक्तात् त्वंसर्पोभवेतिशापोदधेःशापसमुद्रात् उत्तरेःप्रश्नोत्तरेःउत्तार्य बहिर्निष्कास्यविस्मारितःविस्मृतिंमापितःनिजविधेः १
स्वप्रारब्धस्य दुर्विलासोविषमपरिपाकोयस्य तस्मात् शापविमुक्ताद्देवत्वंप्राप्तान्नहुषादेव आसादिताःप्राप्ताःवराःयेषांते पांडवाःवरारोह

या सह द्रौपद्या सहमत्स्यनगरस्य विराटनगरस्य अनतिसमीपगामिनीं किंचिद्दूरं स्थितां पितृवनशमीं स्मशानस्थशमीवृक्षं अभजन्
आश्रयन् आदौ श्मशानशमीं किमिति भेजुः तत्र हेतूत्प्रेक्षामाह निजेति निजधाम्नः निजतेजसः पिधानस्य आच्छादनस्य वैदग्ध्यं चातु-
र्यं अभ्यसितुं कामो इच्छा येषां ते तथाभूता इव शम्यां स्वांतर्गताग्नेस्तेजोगोपनकौशलं वर्तते स्वतेजोगोपनाय तदभ्यसितुकामा इवेत्युत्प्रे-
क्षा अगस्त्यशप्तसर्पवपुर्धर नहुषवेष्टितभीमो युधिष्ठिरेण तत्प्रश्नोत्तरदानेन मोचित इति भारतीकथाऽनुसंधेया ॥ १ ॥ पद्यं ॥ ते पांड-

॥ पद्यं ॥ क्रमेण मत्स्येंद्रपुरोपकंठे करालमापुः पितृकाननं ते वधूद्रुहां भाविनि सूतजानां वधप्रदेशस्य दिदृ
क्षयेव ॥ २ ॥ शमीतरौ तत्र निधाय शस्त्रमंतर्ज्वलदग्निकल्पं जगाहिरे वेषमिवान्यमुच्चैर्ध्वजं विराट
स्य पुरं प्रवीराः ॥ ३ ॥

वाः क्रमेण मत्स्येंद्रस्य विराटस्य पुरोपकंठेन नगरसमीपे करालं भयंकरं पितृकाननं श्मशानं आ
पुः प्रापुः श्मशानप्राप्तौ हेतूत्प्रेक्षामाह वधेति वधूद्रुहां द्रौपद्याः द्रोहकर्तॄणां सूतजानां कीचकानां भाविनि भविष्यति वधे प्रदेशस्य स्थ-
लस्य दिदृक्षयेव समीचीनं वा न वेति द्रष्टुमिच्छयेव ॥ २ ॥ अमी प्रवीराः पांडवाः तत्र श्मशाने शमीतरौ तस्याः शम्याः अंतः गर्भे ज्वलन् यो
ग्निः तत्कल्पं तत्सदृशं शस्त्रं जातावेकवचनं शस्त्राणीत्यर्थः निधाय संस्थाप्य अन्यं भिक्षुबल्लवादिरूपं वेषमिव उच्चैः उच्चाः ध्वजाः यस्मिन्
तत् विराटस्य पुरं जगाहिरे प्रविविशुः अन्यं वेषं गृहीत्वा पुरं जगाहिरे इति भावः ॥ ३ ॥ ॥ ६ ॥ ॥ ६ ॥ ॥ ६ ॥ ॥

धर्मसूनुः उत्कर्षनिकर्षयोः उत्कृष्टत्वनिकृष्टत्वयोः स्वंस्वकीयं समत्वं दर्शयिष्यन्निव क्रमेणपरमः हंसोपि परमहंससंन्यासी हंसपक्षी चा
पिभूत्वासद्यः तत्कालेएव कंकत्वं कंकनामकविप्रत्वं गृध्रसदृशपक्षित्वंच आपद्यत प्रापत् हंसगृध्रयोर्महदंतरं लोकेप्रसिद्धं ॥ ४ ॥ कृष्णाद्रौ
पदी तथाविधं यतिवेषं धर्मराजं वीक्ष्य एततू यतित्वं पुरा तीर्थयात्राप्रसंगे अर्जुनस्येव अस्यापिधर्मस्यापि एततू यतित्वंमम कामपि अपरां-
अन्यांसपत्नीं संपादयेत् किंनु इतिशशंके यथार्जुनस्ययतित्वेसुभद्रा सपत्नीसंपादिता तथाधर्मस्य यतित्वं अन्यांसपत्नींसंपादयेत्किंनुइति

समत्वमुत्कर्षनिकर्षयोःस्वंसंदर्शयिष्यन्निवधर्मसूनुः क्रमेणहंसःपरमोपिभूत्वाकंकत्वमापद्यतसद्यएव ४ पुरार्जु
नस्येवयतित्वमेतदस्यापिकामप्यपरांसपत्नीं संपादयेत्किंनुममेतिकृष्णातथाविधंवीक्ष्यनृपंशशंके ५ त्रिदंडकाषाय
कमंडलूज्वलोजपस्फुरद्दंतपटोयुधिष्ठिरः उपानहंदारुमयींपदास्पृशन्नुपासदत्संसदिमेदिनीश्वरं ॥ ६॥

शंकितवतीत्यर्थः ॥ ५ ॥ त्रिदंडं दंडत्रयंच काषाये रक्तवस्त्रेच कमंडलुश्च तैःउज्वलः शोभमानः जपेन ओंकारजपेन स्फुरंतौ किं-
चिज्वलंतौ दंतपटौ ओष्ठौयस्यसः युधिष्ठिरः दारुमयींकाष्ठमयीं उपानहं पादुकां पदाचरणेनस्पृशन् धारयन् संसदि सभायांमेदिनी- २
श्वरं विराटंउपासदत् समीपेजगाम ॥ ६ ॥ ॥७॥ ॥७॥ ॥६॥ ॥५॥

तंप्रतिंदह्वासमुत्थितः मात्स्यः विराटः धृतोप्रश्रयविस्मयौनम्रताश्चर्यौयेनतथाभूतः सन् तस्ययतेः पादस्यपांसुंधूलिंफालांतेललाटमध्ये
चक्रे तंयतिंपुनः आसनेस्वसिंहासनेचक्रे स्वसिंहासनेउपवेशयामासेत्यर्थः ७ अथदुर्वीराणांराक्षसादीनांगर्वंनसहतेसोदुर्वीरगर्वासह
नः अयंभीमः शोणाधरायांद्रौपद्यांलोलुपः अतिलुब्धोयः सूतसूनुः कीचकः तस्यप्राणानिलान्पायितुंकिल दर्वीमहाराष्ट्रभाषयापळीकरे
यस्यसः सर्पश्चदर्शितः सूदभावः पाचकत्वंयेनतथाभूतः आसीत् सर्पावायुपानंकुर्वंति ८ सूदाकृतिः पाचकवेषः सः नियुद्धेनराक्षस

हस्वासमुत्थितोमात्स्योधृतप्रश्रयविस्मयः तत्पादपांसुफालांतेचक्रेतंपुनरासने ७ दुर्वीरगर्वासहनो
थभीमोदर्वीकरोदर्शितसूदभावः शोणाधरालोलुपसूतसूनोःप्राणानिलान्पाययितुंकिलासीत् ८ पितुः
सखायंपरिपूज्यमेधोर्दिनेदिनेतृप्तिमिवोपनेतुं सूदाकृतिः सोपियद्यौविराटवृकोदरोवृत्तशरावपाणिः ९
कुलशैलशृंगइवजंगमेतदाकुरुकुंजरेचलतिकंपनंमुहुः वसुधैवतस्यनपुनरस्यकेवलंवहतिस्मकीचक
भुजाथदक्षिणा १०

हंतावृकोदरोपिभीमोपिपरिपूज्यंसर्वत्रः पूजार्हंपितुः वायोः सखायंमित्रंअग्निंदिनेदिनेएधैः काष्ठैः तृप्तिं
उपनेतुमिव वृत्तशरावपाणिः दर्वीहस्तः सन्विराटंययौ ९ तदाजंगमेकुलशैलस्यविंध्यादिपर्वतस्यशृंगइवेत्युत्प्रेक्षा कुरुकुंजरेकुरुश्रेष्ठेभी
मेचलतिगच्छतिसतितस्यपुरस्यवसुधैवकेवलंमुहुः कंपनंवहतिस्म नउवाह किंतु अदक्षिणासव्याभुजापिकंपनंवहतिस्म मृत्युसूचकसव्यभु
जास्फुरणंबभूवेतिभावः १० ७

महानसेपाकशालायांअवतरतः वसतः जनस्यपतिः अध्यक्षः कृतः महान्सः भीमः स्वादुषुकर्मसुपाकक्रियासुरतः सन्‌माल्स्यंविराटंअसेवत ११
स्त्रीत्वेनयोगः वीरस्यगर्ह्यः निंद्यः खलुसत्यंपुंस्त्वेनयोगस्तुअंतःपुरेराजपत्नीगृहेवासस्यविघ्नःप्रतिबंधकः इतिहेतोरिव अवश्यभाव्यंउर्वशीशा
पेनभविष्यत्संढत्वंनपुंसकत्वंआदायगृहीत्वापार्थोपिअर्जुनोपिमात्स्यंजगाम १२ नृपस्यगृहसुविकृतवसतिः असौअर्जुनः तालः तालक्रिया
मानकर्ताकराद्याघातः पाणौयस्यतथाभूतः सन्‌कन्याः नर्तयतिस्म कः काइव यथावनांतेवनमध्येमधुकरैः भ्रमरैः कृत्वासुरवरः सशब्दः मल

महानसेऽवतरतोजनस्यसपतिः कृतः महानसेवतरतोमात्स्यंस्वादुषुकर्मसु ११ स्त्रीत्वेनयोगःखलुवीरगर्ह्यः
पुंस्त्वेनचांतःपुरवासिविघ्नः इतीवषंढत्वमवश्यभाव्यमादायपार्थोपिजगाममात्स्यं १२ कृतवसतिरसौनृपस्य
कन्यागृहसुविनर्तयतिस्मतालपाणिः मधुकरसुरवरोलतावनांतेमलयगिरेरिवमारुतप्ररोहः १३ ममध्वजांकस्य
बिभर्तिसंज्ञामसाविति प्रेमभरादुपेतः प्रसूनधन्वेवसुतोपिमाद्यामात्स्येंद्रमागत्यननाममूर्ध्ना १४

यगिरेः मारुतप्ररोहः वातांकुरः लताः नर्तयतितद्वत्‌ १३ माद्याः सुतः नकुलोपिअसौविराटः ममध्वजांकस्यमत्स्यसंज्ञांमत्स्यइतिनामबिभर्ति- ३
धारयति इतिहेतोः प्रेमभरात्प्रेमातिशयात्‌उपेतः प्राप्तः प्रसूनधन्वेवमत्स्येंद्रंआगत्यमूर्ध्नाननाम १४ ॥ ॥ ॥

राजाविराटः नकुलंपश्यन्सन्दृशोः निमेषणेमीलनेतंद्रालुःअलसःसन् निजांमात्स्येश्वरइतिअभिख्यांनामप्रकटः अर्थोयस्याःसाप्रकटार्थातां
तांनिनाय मत्स्यस्यानिमिषत्वात् राज्ञानकुलसौंदर्यदर्शनेअनिमिषत्वेननिजमत्स्येश्वरनाम अन्वर्थकंकृतमित्यर्थः १५ करेणकशांअश्वादे
स्ताडिनींचर्ममयींरज्जुंबिभ्राणंशशांककुलस्यभूषणवत्शोभाकरंदुरापःदुष्प्रापःपराक्रमोयस्यतंनकुलंमंदुरायाः वाजिशालायाःपतिंआ
तेनेचकार १६ अत्रएतत्गवांवृंदंकतिपयैःदिनैःअस्माकंविरोधिविरतेःगुप्तस्थित्यंतस्यहेतुःअपहरणेनकारणंभविताभविष्यतिइति

तंपश्यन्नकुलंराजातंद्रालुर्दृङ्निमेषणे निजांमात्स्येश्वराभिख्यांनिनायप्रकटार्थतां १५ कशांकरेसबिभ्रा
णंशशांककुलभूषणं मंदुरापतिमातेनेतंदुरापपराक्रमं १६ अस्मद्विरोधिविरतेर्भवितात्रहेतुरेतद्दिनैःकति
पयैरितिजानतेव पांडोःसुतेनचरमेणचतस्यराज्ञोवृंदंगवांमजुगुपेपृथुकौतुकेन १७ आगतानगरवासवां
छयादेवतेवविपिनस्यपार्षती केलिपुष्पमिवदंतकंकतंबिभ्रतीनृपवधूमुपागमत् १८

जानतेवचरमेनकनिष्ठेनपांडोःसुतेनसहदेवेनतस्यराज्ञः विराटस्यगवांवृंदंसमूहंपृथुकौतुकेनअजुगुपेरक्षितं कौरवैरेतद्धरणसमयेऽस्मा
कंप्राकट्यंभविष्यतीतिजानतेवेत्युत्प्रेक्षा १७ नगरवासवांछयाआगताविपिनस्यवनस्यदेवतेवकेलिपुष्पमिवदंतमयंकंकतंकेशप्रधानो
पकरणंबिभ्रतीपार्षतीद्रौपदीनृपवधूंविराटस्त्रियंसुदेष्णांउपागमत् १८ श्रीसीतारामचंद्राभ्यांनमः छ छ

सैरंध्रीरूपभाजः अस्याः द्रौपद्याः जाते स्वीकृतसैरंध्रीजाते नैच्यान्नीचत्वात् शिरः नतं सुदेष्णायास्तु शिरः सुंदरीं एनां द्रौपदीं वीक्ष्य व्रीडेनल
ज्जयापीडनात् नतं १९ असौ द्रौपदी माधवोदयस्य वसंतप्रादुर्भावस्य श्रीः शोभा वनभुवः वनभूमेरिव मनुजपतेः विराटस्य अवरोध
योषितः सुदेष्णायाः अनुदिनं प्रतिदिनं अखिलालिभिः समस्तसखीभिः अन्यत्र समस्तभ्रमरैः लालनीयैः श्लाघनीयैः अतीवहृद्यैः म

सैरंध्रीरूपभाजोस्या जाते नैच्यान्नतं शिरः सुदेष्णायास्तु वीक्ष्यैनां सुंदरीं व्रीडपीडनात् १९ वनभुव इव माध
वोदयश्रीर्मनुजपतेरवरोधयोषितोसौ अनुदिनमखिलालिलालनीयैरलमकरोत्तिलकैरतीवहृद्यैः २० ग॰
अनंतरं स्ववशात् प्रमादहतकंकतमतिरसोत्पादनचणमधिगतशोभनादनपाटवमिश्रितगंधर्वकुलमाकलितगो
त्रापलापं पंचानामपि रूपसुदंचयंती पांचालनृपतिसुता पंचापि पतीननुयातवती ३ प॰ विमतानपि तैर्जित्वा
विवासमिव दायकः अक्षेष्वकुरुतावृत्तिमवनींद्रेण धर्मभूः २१ नोहरैः तिलकैः ललाटे विशेषकैः अन्यत्र तिलपुष्पैः अ
लमकरोत् अलंकृतवती वसंतलक्ष्मीः वनभुवं तिलकपुष्पैरिव द्रौपदी सुदेष्णां विशेषकैरलंकृतवतीत्यर्थः २० ग॰ एतद्द्वयं क्षेपकत्वा
न्नव्याख्यातं ३ प॰ तैरपि अक्षैरपि अपिशब्दात् युद्धसंग्रहः विमतान् शत्रून् जित्वा विवासं प्रवासं दायक इव धर्मभूः अवनींद्रेण विराटेन ४
सह अक्षेषु पाशकक्रीडासु आवृत्तिं अकुरुत अन्योपि अभ्यासदार्ढ्यार्थमावृत्तिं करोति अवनींद्रेण सहाक्षक्रीडया तत्प्रीतिं वर्धयामासेति
भावः २१

ग० एवंतैस्तैः स्वकृत्यैः अंगीकृताक्षक्रीडापाकक्रियाकन्यानर्तनाश्वाध्यक्षतागवाध्यक्षतारूपस्वस्वकृत्यैः संपादितंशिरः कंपंग्लाघाभि नयात्मकशिरश्चलनंवयसावार्धक्येनकृतमिवसंततंअनुभवतानेनमहीपतिनाविराटेनबहुमानिताः पृथासुताः धर्मराजादयः यथावि वसनस्यदेशांतरप्रवासस्यखेदंदुःखंनाज्ञासिषुः नज्ञातवंतः तथाइतरेजनाः तत्रनगरेतदीयंपाण्डवीयंस्वरूपमपिनाज्ञासिषुः २

ग० एवंतैस्तैः स्वकृत्यैः संपादितंशिरः कंपंवयःकृतमिवसंततमनुभवतानेनमहीपतिनाबहुमानिताः पृ थासुताः यथाविवासनखेदंतथातदीयमपिस्वरूपमितरेजनास्तत्रनाज्ञासिषुः २ ग० अथैकदातत्रसु देष्णायाः प्रेषणेनमदनोत्सवासवायवासवायतनसदृशंवासगेहमागतांकौरवाधमकरपरिक्लेशदुःखादिव विवर्णेनवाससासावगुंठितांगीनखशशिपरंपरासेवनलालसतयेवप्रपदसंसुखीनलोचननीलोत्पलांराजीवशं कयानुव्रजताराजहंसेनेवरजतभाजनेनराजितकरांचलांपांचालसुतांविलोक्यपंचेषुबाणवंचितविवेकोम चादुपसृत्यकिंचिदाकुंचितमौलिः कीचकोनीचांवाचमुवाच ३ ग० अथतत्रविराटगृहेएकदामदनोत्सवार्थेआस वायमद्यमानेतुंसुदेष्णायाः प्रेषणेननत्वात्मबुध्द्यानिभावः वासवायतनेनइंद्रगृहेणसदृशंवासंगेहंस्ववसतिगृहंआगतांपांचालसुतां द्रौपदींविलोक्यपंचेषुणामदनेनवंचितः विवेकः किंचिदाकुंचितः वक्रीकृतः मौलिः मस्तकोयेनसः कीचकः एतन्नामकसेनापतिः मं

चातमंचकात्उपसृत्यकिंचित्तस्याः समीपंगत्वावाचंउवाच कीदृशींपांचालसुतां कौरवाधमस्यकुरुकुलोत्पन्नेषुनीचस्यदुःशासनस्य
करेणपरिक्लेशः आकर्षणादिः तज्जन्यदुःखादिवविवर्णेननिस्तेजस्केनमलिलेनचवाससावस्त्रेणअवगुंठितांगीं तथानखाएवशशि
नः चंद्राः तेषांपरंपरापंक्तिः तस्याः सेवनेयालालसताअतितृष्णातयेवप्रपदयोः पादाग्रयोः संमुखीनेलोचनेएवनीलोत्पलेयस्यास्तां
परपुरुषदर्शनंमाभूदित्यधः पश्यंतीमितिभावः राजीवशंकयाकमलभ्रांत्याअनुव्रजताराजहंसेनेवराजतभाजनेनराजितंशोभि-

प॰ इदमेवहिसद्मभद्रभद्रंयदिदानींतवमार्तवृज्ञमंघ्रेः अयमप्यहमस्मिधन्यधन्योहरिणाक्षित्वदपांगगोच
रोयः २२ नतगात्रियदागमेनमांनयसेमोदगिरेरधित्यकां चिरपुण्यफलांकुरश्रियांदिवसोवैजननस्तदेषमे २३

तंकरांचलंकराग्रंयस्यास्तां २ प॰ इदमेवहिसद्ममगृहंभद्रात्भद्रंअतिकल्याणरूपमित्यर्थः यद्यतः इदानींतवअंघ्रेः मार्दव-
त्नं अंघ्रिस्पर्शवदित्यर्थः हेहरिणाक्षि यस्तवअपांगस्यअपांगदर्शनस्यगोचरः विषयः अयमहमपिधन्यधन्यः अतिधन्योस्मि २२
हेनतगात्रि हे कृशांगि यत्यतः आगमनेनमोदगिरेः हर्षपर्वतस्यअधित्यकांउपरिभागंनयसेप्रापयसे तत्तस्मात्एषः अद्यतनः दि
वसः चिरपुण्यस्यचिरकालिकपुण्यस्यफलांकुराः फलप्रादुर्भावाः तेषांश्रियः संपत्तयः तासांवैजननः प्रसूतिमासः यतः स्वागमने- ५
नमत्यंहर्षंददासिततः प्राचीनपुण्यफलोदयः प्राप्तइतिभावः २३ ७ ७ ७ ७

हेमालिनिपुष्पमालाकर्त्रिसैरंध्रिमालावतिचअधुनातेतवअभिधाया: मालिनीनाम्न: अन्वर्थतामालावैशिष्ट्येनअर्थयुक्तत्वंकचेषु
केशेषुकुत: नजागर्तिनविद्यतेइत्यर्थ: अथवातस्या: अभिधाया: प्रतीपंविपरीतंयथातथाउदितानांउक्तानांवर्णानांअक्षराणांपं
क्ते: अर्थ: नीलिमाअमीषुकचेषुअलंकरणंभूषणंवर्ततेइतिशेष: तवकचेषुमुक्तापुष्पादिमालापेक्षयानीलिमैवशोभाकारकइ
तिभाव: आक्षेपालंकार: आक्षेपस्वयमुक्तस्यप्रतिषेधोविचारणात्इतिलक्षणात् २४ हेबालेतेतवबाह्वो: भुजयो: अनंगदत्वस्य

अन्वर्थतामालिनितेभिधाया:कुतोनजागर्त्यधुनाकचेषु तस्या:प्रतीपोदितवर्णपंक्तेरर्थोथवालंकरणंत्वमीषु २४ बाह्वोरनंगदत्वस्यबालेतेकारणेउभे एकंतयोस्तुलावण्यमितरंनावगम्यते २५ अरम्यभावंभजतेजगत्यामंगेषुकिंचिद्विकलोपिलोक: निरीक्ष्यसेत्वंतुविचित्रमेतन्मध्येनहीनापिमनोज्ञमूर्ति: २६

अंगदसंज्ञकबाहुभूषणसाहित्यस्यमदनदत्वस्यचउभेद्वेकारणेभवत: तयोर्मध्येमदनदत्वस्यकारणंएकंलावण्यंसौंदर्यंअवगतं-
इतरत्बाहुभूषणराहित्यस्यकारणंनावगम्यतेनज्ञायते अलौकिकसौंदर्यवत्यास्तवभूषणाभावेदारिद्र्यसौकुमार्यादिकारणंन
ज्ञायतेइतिभाव: २५ जगत्यांविश्वस्मिन् अंगेषुअवयवेषुमध्येकिंचिदपिस्वल्पमपिविकल:अवयवलेशेनहीन:लोक: अरम्यभा
वंअरम्यत्वंभजतेधारयति त्वंतुमध्येनहीनापिरहितापिमनोरमामूर्तिर्देहोयस्यास्तथाभूतानिरीक्ष्यसेदृश्यसे एतद्विचित्रंआश्चर्यका
रकं मध्यस्यातिसूक्ष्मत्वेनवर्णनंकटिकृशत्वं २६ श्रीराम

चं॰भा ६

हे तन्वि त्वतास्त्रः आरक्तः अयं अधरः अधरोष्ठः पल्लवो न भवति विद्रुमः प्रवालश्च न भवति किंतु बिंबमेव कुत इति चेदाह चंद्र इति हि

यतः एतत्तव वक्त्रं सुखं चंद्रः यदि स्यात् तर्हि लोके चंद्रस्य बिंबं सहजं सहोत्पन्नं भवेत् अधरबिंबत्वकल्पनाश्लेषेण चंद्रबिंबत्वं स्था

पितं २७ हे कांते धात्रा ब्रह्मणा पुरा इदं तव आननं सरसि कमलानां आवलीषु पंक्तिषु स्त्रष्टुं उत्पादितुं विस्मृतमेव पश्चाद्धि चिंतनवता कम

लमध्ये स्त्रष्टव्यं यत् तदत्र सृष्टमिति मनसि आनीतवता धात्रा तस्याः कमलावल्याः उपांतभागे समीपभागे विचरतः हंसपादः लक्ष्यते रव

नपल्लवस्तन्वि न विद्रुमश्च ताम्रोधरोयं तव बिंबमेव चंद्रो यदि स्यात्तव वक्त्रमेतच्चंद्रस्य बिंबं सहजं हि लोके २७

कांते तवाननमिदं कमलावलीषु स्त्रष्टुं पुरा सरसि विस्मृतमेव धात्रा पश्चाद्धि चिंतनवतात्तदुपांतभागे संलक्ष्य

ते विचरितः खलु हंसपादः २८ कूपस्य तीरे निवसन्नपायं को वा न धत्ते वद कोमलांगि त्वन्नाभिकूपस्य तटे नि

वासी न दृश्यते संप्रति मध्यभागः २९

लु हंसानां तत्र विद्यमानत्वात्तत्पादोपि तत्र वर्तत एव लिपिलेखनसमये यत्र यत्किं

चित् विस्मृतं तत्र हंसपादसदृशं चिन्हं क्रियते २८ हे कोमलांगि मृद्वंगि कूपस्य तटे तीरे नीवसन् वा संकुर्वन् को वा पुरुषः अपायं अनर्थं

न धत्ते न धारयति यतः तव नाभिरेव गंभीरत्वात्कूपः तस्य तटे निवासी मध्यभागः संप्रति न दृश्यते तस्मात्कूपे पतितो दृष्टश्चेत्यनुमीयत इ

ति भावः मध्यस्यातिकृशत्वे पर्यवसानं सामान्यस्य विशेषणसमर्थनात्मको र्थांतरन्यासालंकारः २९ ७ ७

टी॰का॰ ६

६

हेसैरंध्रिकं वियुक्तं वियोगिनं सिंहसंहननं सुंदरावयवसौंदर्ययुक्तं पुरुषं ऊहयितुं तर्कयितुं मृगयितुमिति यावत् केशान् त्रेधा विभज्य रचितां वेणीं वहसे मस्तके धारयसि वरांगरूपोपेतो यः सिंहसंहननो हि स इत्यमरः वेणीमुत्प्रेक्षते त्रेधेति अक्षीणः पूर्णः — वल्क शशी सुखचंद्रमा तस्य सेवनस्य यो लाभः तेन तोषात् हर्षात् मिथः अन्योन्य आलिंगितां कृतालिंगनां रजनेः रात्रेः त्रियामीमिव यामत्रयमिव रात्रेश्चतुर्थप्रहरस्य परदिवसांतर्गतत्वात्त्रियामत्वं ३० शोभनाः दंताः यस्याः सा सुदती नत्संबुद्धौ हे सुदति अधुना बहु

अक्षीणवल्कशशिसेवनलाभतोषादालिंगितामिव मिथो रजनेस्त्रियामीं त्रेधा विभज्य रचितां वहसे हि वेणीं कं सिंहसंहननमूहयितुं वियुक्तं ३० सुदति बहुपरागधूसरापि त्वमपहरस्यधुना मनो मदीयं रतिरिव हरकोपदह्यमानस्मरतनुधूमलवाविलाखिलांगी ३१ त्वामुल्लसद्बिंबफलाधरां मे मामप्यनंगाशुगमर्दितं ते विशंकमस्मिन्विजने प्रदेशे पद्मानने पातुमयं हि कालः ३२ भिः परागैः धूलिभिः धूसरा मलिनापि त्वं मदीयं मनः अपहरसि केव हरकोपेन दह्यमाना या स्मरतनुः तस्याः धूमलवेन अविलं मलिनं अखिलांगं यस्याः सा रतिरिव स्मरवधूरिव ३१ हे पद्मानने अस्मिन् जने निर्जने प्रदेशे स्थले उल्लसत् बिंबफलवत् अधरो यस्याः तां पातुं चुंबितुं अधरोष्ठरसपानं कर्तुमित्यर्थः मे अयं कालः समयः अनंगाशुगैः मदनबाणैः मर्दितं पीडितं मामपि पातुं रक्षितुं ते नव अयं कालः हि निश्चये अयमन्योन्योपकर समयो वर्ततेइति भावः ३२

ग० इतितस्यकीचकस्यवचनं आकर्ण्यापिचित्तमेवचंपकमंजरीतस्यांचंचरीकायमाणः भ्रमरवत् आचरन्पंचशरस्यमदनस्यविकारो–
यस्याः सा यथा चंपकमंजर्यांभ्रमरोनगच्छतितद्वत्सैरंध्रीचित्तंप्रतिमदनाविकारोनागच्छादित्यर्थः . पांचालीद्रौपदी स्मररागतिमिर
स्यस्मरकृतप्रीत्यात्मकतमसः कौमुदींनाशकर्त्रींज्योत्स्नांइमांवक्ष्यमाणांगिरंउदीरयामासउवाच तदनुरागप्रतिकूलांवाणींजगा
देत्यर्थः ४ प० हेकीचकत्वंअंतः पुरेषुअंतः पुरसंबंधिराजपत्नीषुविरहन्क्रीडन्सन्नपिसैरंध्र्येराजपत्नीप्रसाधनकारिण्यैस्पृ

इतितस्यतादृशंवचनमाकर्ण्यापिचित्रचंपकमंजरीचंचरी काथमाणंपंचशरविकारापांचालीगिरमिमांस्मरराग
तिमिरकौमुदीमुदीरयामास ४ प० अंतःपुरेषुविहरन्नपिकीचकत्वंसैरंध्र्येस्पृहयसीतिविगत्द्यमेतत् र
म्येषुकल्पकुसुमेषुचरन्द्विरेफोरज्येतकिंपितृवनद्रुमगुच्छिकायां ३३ प्रतायतेचपलतापतिवल्लीषुधाहठा
त् इष्टार्थसिद्धेः प्रागेवादिष्टांतंदोग्धिसानृणां ३४ हयसि अभिलाषंकरोषिइत्येतद्विगर्हितंनिंद्यं रम्येषुमनोहरेषुकल्प
कुसुमेषुकल्पवृक्षपुष्पेषुचरन्संचरन्द्विरेफः भ्रमरः पितृवनद्रुमस्यश्मशानवृक्षस्यगुच्छिकायांपुष्पमंजर्यांरज्येतकिंआसक्तोभवेत्किं नै
वभवेदित्यर्थः उत्तमपदार्थान्सेवमानोधमपदार्थाभिलाषंनैवकुर्यादितिभावः ३३ पतिवल्लीषुसभर्तृकासुस्त्रीषुहठात्बलाद्याचप
लताअविचारः प्रतायतेक्रियते साचपलतानृणांइष्टार्थस्यरतेः सिद्धेः प्राक् आदावेवदिष्टांतंमृत्युंदोग्धिददातीत्यर्थः पतिवत्न्यभिलाषोमरणहे
तुरितिभावः ३४

तवभर्त्तानास्तीत्यनौचित्वीनिश्चेदत आह गंधर्वाइति गंधर्वाःमेकांताःपतयःसंति तान्गंधर्वान्स्मरःमद्धेतुकमदनःअनिशंसदाबाधते ब
हुवचनोक्तागंधर्वाःकतिसंतीतिचेत्तत्संख्यांबाधनहेतूत्प्रेक्षयाह स्वेति स्वाभिख्यांस्वलावण्यशोभांस्वास्त्राणांस्वबाणानांसंख्यांपं
चत्वसंख्यांवहंतिधारयंतिइतिईर्ष्ययाकिलईर्ष्ययेव मय्यनुरक्ताःपंचगंधर्वामत्पतयःसंतीतिभावः ३५ दोष्मतांप्रशस्तबाहुमतां-
अवतंसाःशेखरीभूताःवीरश्रेष्ठाइत्यर्थः मानिनःअभिमानवंतः तेगंधर्वाःस्वरूपंकेवलंअप्रमादेनसावधानतयानगोपायंतिनगु

गंधर्वाःसंतिमेकांताबाधतेयान्स्मरोनिशं स्वाभिख्यांस्वास्त्रसंख्यांचवहंतीतीर्ष्ययाकिल ३५ दोष्मताम
वतंसास्तेस्वरूपंनैवकेवलं गोपायंत्यप्रमादेनपरेभ्योमांचमानिनः ३६ तदद्यपथिवामेस्मिन्संप्रतिष्ठास
सेयाद् तेतुत्वांचारयिष्यंतिदक्षिणोपिधृतक्रुधः ३७ इत्यूचिषीसामहिषीकुरूणांशेमुषीमती सद्योनिव
वृतेतस्माच्चित्तवृत्तिरिवात्मनः ३८ मंकुर्वंति किंतुपरेभ्यःपुरुषांतरेभ्यःमांचगोपायंतिरक्षंति ३६ तत्तस्मादद्यवामेव
क्रेअदक्षिणेचपथिवीरवनिताभिलाषरूपेमार्गेयदिसंप्रतिष्ठाससेसम्यक्प्रस्थानंकर्तुमिच्छसितर्हिधृताक्रुट्क्रोधोयैस्तेगंधर्वास्तुत्वांद
क्षिणोपिपथ्ययमादृज्जुमार्गेचारयिष्यंतिगमयिष्यंति मदभिलाषंकरोषिचेत्तर्हिगंधर्वास्त्वांहनिष्यंतीतिभावः ३७ इतिएवंप्रकारेणऊचि
षीउक्तवतीशेमुषीमतीबुद्धिमतीसाकुरूणांमहिषीद्रौपदीसद्यःतदानीमेवतस्मात्कीचकान्निववृतेनिवृत्ता केव आत्मनःचित्तवृत्तिरिव य

धातस्याश्चित्ते वृत्तिस्तस्यान्निवृत्ता तथा सापि निवृत्तेत्यर्थः ३८ धावंत्याः हठात् तत्प्रवृत्तिः स्यादिति भयात्पलायमानायाः अस्याः सैरंध्याः रिंखणेन स्खलद्गमनेन पदोः चरणयोः युगं यथा यथा आरुण्यं रक्ततां अधत्त दधौ तथा तथा अस्य कीचकस्य दृशोः युगं रुषा रोषेण आरुण्यं अधत्त पलायमानायाः तस्याः गृहणविषये कीचकः रोषेण पश्चाद्धावेतेति भावः ३९ ततः कृतांतभासा यमसदृशेन तेन

यथा यथास्या धावंत्या रिंखणेन पदोर्युगं तथा तथारुषारुण्यं तस्याधत्त दृशोरपि ३९ कृष्णा
ततस्तेन कृतांतभासा केशे गृहीत्वा भुवि पातिता सा पर्याय बद्धोद्यमविश्रमाभ्यां पद्भ्यां कराभ्यामपि
पर्यभावि ४० ꣸ ꣸ ꣸ ꣸ ꣸

कीचकेन केशे गृहीत्वा धृत्वा भुवि पातिता सा कृष्णा द्रौपदी पद्भ्यां कराभ्यामपि पर्यभावि पराभूता ताडितेत्यर्थः किंभूताभ्यां पद्भ्यां कराभ्यां पर्यायेन बद्धौ धृतौ उद्यमविश्रामौ ताडनविषये उद्योगविश्रांती याभ्यां तौ लत्ताप्रहारैश्चरणयोः श्रमाद्विरामे कराभ्यां ताडनं च-कार ताडनेन करयोः श्रमाद्विरामे पद्भ्यां लत्ताप्रहारान् चकारेति भावः ४० ꣸ ꣸ ꣸ ८

पद्यं॥ तदापराभवसमये याम्टगाक्ष्याः द्रौपद्याः संज्ञाज्ञानं प्रहारभीत्येवस्वस्यापिप्रहारः स्यादितिभयेन क्वचित्नाड्यां अंतरधत्त गुप्ताबभूवमूर्छायांज्ञानाभावो भवति सासंज्ञा प्रहर्तरि दूरगतेसति चिराय बहुकालेन उद्गम्य प्रकटीभूय दृशौ उद्घाटयामास अस्मात् प्रस्तुतवृत्तांतात् काचित्स्त्रीकस्मिंश्चिदन्यांस्त्रियंस्वसमीपे ताडयति सति स्वस्मिन्प्रहारभयेन कपाटंपिधायगृहमध्येकुत्रचिद्गुप्ताभूत्वाप्रहर्तरिगतेसति पश्चादुत्थायकपाटंउद्घाट्य तीत्यप्रस्तुतवृत्तांतस्फुरणात् समासोक्तिरलंकारः समासोक्तिः परिस्फूर्तिः प्रस्तुतेप्रस्तुतस्यचेदितिलक्षणात्॥ ४१॥ ग० तदनुसंज्ञाप्राप्त्यनंतरंशनैरुत्तस्थुषी उत्थितवती धरातलस्य परागैः पांसुभिः

प्रहारभीत्येवतदामृगाक्ष्यानाड्यांक्वचिद्यांतरधत्तसंज्ञा उद्गम्यसादूरगतेप्रहर्तर्युद्घाटयामास दृशौचिराय ४१॥ गद्यं० तदनुशनैरुत्तस्थुषी धरातलपरागधूसरिमतिरोहितदीधितितयावासरापलापितमहामहौषधिलतेवविलुलितचूर्णकुंतलतयाचक्रवाताकुलीकृतबालपूलिकाचरममृगीवसूतान्ववायजनपदस्यप्रथमामीतिबाधामिवबाष्पधारामुत्सृजंती क्वचिदपिशरणमलभमानासायाज्ञसेनीमंदंमंदंतदेवभूपतिभवनमभिजगाम॥ ५॥

धूसरिम्णा धूसरत्वेन तिरोहिता अंतर्हिता दीधितिः शरीरकांतिर्यस्याः सातस्याः भावस्तत्तातया वासरेणदिवसेन अपलापितंनिह्नुतंमहः तेजोयस्याः सामहौषधिलतेव विलुलिताः मर्दिताः चूर्णकुंतलाः वक्रकेशाः यस्याः सातस्याः भावस्तत्तातयाचक्रवातेन आकुलीकृतामर्दिताबालपूलिका पुच्छकेशगुच्छो यस्याः साचरममृगीव चमरीव सूतान्ववायजनपदस्य कीचककुलजनपदस्य प्रथमांईतिबाधामिव अतिवृष्टिमिवनाशकर्त्रीमित्यर्थः बाष्पधारांउत्सृजंती क्वचिदपिशरणंरक्षितारं अलभमानासायाज्ञसेनी द्रौपदी तदेव भूपतिभवनंमंदंमंदंयथातथा अभिजगाम॥ ५॥ ॥ ७॥ ॥ ७॥ ॥ ७

न॰ ना॰ ९

॥पद्यं॥ तांरोरुधांदृष्ट्वाज्ञात ःवृत्तांत ःकीचककृततताडनादिर्येनस ःदेव्याः राजपत्न्याःगेहेचरन् जनःनयनयोः अंभःबाष्पंविमुमुचेनत्याजभाषितंभाषणंतु

किंचनांकर्माण्यनांविमुमुंच रामगृहस्योजन ःकीचककृततताडनांसैरंध्रींदृष्ट्वादुःखात्केवलंरुरोदतद्भयात्सदसद्भाषणंतुनचकारेत्यर्थः॥ ४२॥ सांद्रोपदी

सायंगायंकाले रात्रेःप्रथमप्रहरे सायंप्रातर्द्विजातीनामशनंश्रुतिचोदितमित्यत्रसायंपदस्यतथार्थदर्शनात्महानसे पाकशालायां शनैरनैःमहानसाशयःतं

पृथुनाविपुलेनशरावेण पाकपात्रविशेषेण कृतंउपधानं उच्छीर्षकंयेनतं धूमाधिरोहेण धूमलेपेनमलिनंवसनंवस्त्रं वसानंपरिदधानं अतएवनीलेन अं

॥पद्यं॥ दृष्ट्वातांज्ञानवृत्तांतोदेव्यागेहेचरन्जनः नयनांभोविमुमुचेनतुकिंचनभाषितं॥ ४२॥ सायंमहानसशयंशनकैःपयो

साम्भोमंरहःपृथुशरावकृतोपधानं धूमाधिरोहमलिनंवसनंवसानंनीलांबुवाहपरिवीत निवाचलेंद्रं॥ ४३॥ निःश्वस्यदीर्घमि

यमंतिकमावसंतीस्पृष्टेनबाष्पसलिलैःकुचयोःस्खलद्भिः बुद्ध्येनतेनकिमिदंव्यसनंतवेतिपृष्टासगद्गदमुवाचविषण्णचेता॥ ४४

बुवाहेन मेघेन परिवीतं आवृतं अचलेंद्रं महापर्वतमिव स्थितं भीमं रहः एकांते शनैःमंदंमंदं यथातथायथो जगाम॥ ४३॥ अंतिकंसमीपभागं आ

वसंतीस्थितांविषण्णांविषादयुक्तंचेतोयस्याःसा इयंद्रोपदीदीर्घंनिःश्वस्य कुचयोःस्खलद्भिःपतद्भिः बाष्पसलिलैःउष्णनेत्रोदकैःस्पृष्टेन अतएवबु ९

द्धेनजागृतेनतेनभीमेनइदंतवव्यसनंदुःखंकिंकीदृशंकिन्निमित्तंचइतिपृष्टासतस्मात्सागद्गदंदुःखात् अस्पष्टाक्षरंयथातथाउवाच॥ ४४॥ ॥ ७॥

अद्यमेदुःखंकिं किमपिनास्तीतिसोल्लुंठनंवचनंएवमग्रेपि अपत्रपा अन्यनोलज्जाचक। वीरपत्नीत्वपदेवीरभार्यात्व स्थाने अभिमानश्चकः एतत्त्रयंकेवलंना स्तीतिन अपितु कीचकनामानीचविड्ःनीचविटःतस्मात्कचंधृत्वाताडनंआप्तवत्याःमेसर्वगतं सर्वनाशोसीति पृथक्कस्यनाशंवच्मीतिभावः॥४५॥मत्स्याधि पस्याधिराटस्यसभांतरेसभामध्ये मयिदुःखेनघुष्यंत्यां आक्रोशंत्यांसत्यांतथ्यस्यसत्यस्य यतेरिवसंन्यासिनइव धर्मसूनोःउपेक्षणंउपेक्षाआसीत्॥४६॥ उपेक्षाकारणंकल्पयित्वाह बुभुक्षतेइति नृपःधर्मराजःजीवंतीमांनबुभुक्षते उपभोक्तुंनेच्छति अपितुमारितांगतप्राणामेव बुभुक्षते उपभोक्तुमिच्छति

किमद्यमेदुःखमपत्रपाकाकोवीरपत्नीत्वपदेभिमानः सर्वंगतंकीचकनीचविड्भाःधृत्वाकचेताडनमाप्तवत्या॥ ४५॥
मयिदुःखेनघुष्यंत्यांमत्स्याधिपसभांतरे तथ्यस्येवयतेरासीद्धर्मसूनोरुपेक्षणं॥ ४६॥ बुभुक्षतेनजीवंतींमारि
तामेवमांनृपः कल्याणंखलुतत्तस्यकंकभावभृतोधुना॥ ४७॥ तस्यैवाज्ञापथेजस्रंचलतास्खलनंविना भव
ताखलुनिःशंकंपरामृश्येकचेपरैः॥ ४८॥

भक्षयितुमिच्छतिच अधुनाकंकभावभृतःकंकभावं कंकसंज्ञांगृध्रत्वंच धारयतःतस्यधर्मराजस्य ततखलुतदेवमृतभक्षणमेव कल्याणंसमीचीनंप्रि यमितियावत्॥४७॥तस्यैवउपेक्षाशालिनोधर्मसूनोरेव आज्ञापथेस्खलनंविनाप्रमादंविना अजस्रंनिरंतरंचलताभवता खलुभवतैवनिःशंकंकचे परैःअन्यैःकरणभूतैःअहंपरामृश्येधृता त्वदुपेक्षयैवपरैर्मत्कचधारणंक्रियतेइतिभावः॥ ४८॥ ॥७॥ ॥५॥ ॥७ ॥७

आत्मनोनिश्चयमाह दुःशासनादिति अपराधेविषये दुःशासनादपि अधिकः लत्ताप्रहारताडनादिकरणात् अयंसूतात्मजः कीचकः ननिहन्यतेचेत्
तर्हिआद्येप्राथमिके कचग्राहिणिदुःशासनेनाशितेपि हतेपिमांवेणिंकचग्रंथनंचसमायुषोअवेहिजानीहि अयंभावः वस्त्रहरणसमयेदुःशासनवध
पर्यंतंवेणिमोक्षंनकरिष्यामीतिप्रतिज्ञाकृता अतस्तद्वधेकृतेपिद्वितीयकचधारककीचकवधोनकरिष्यतेचेत् तर्हियावज्जीवंवेणिमोक्षंनकरिष्या-
मीतिभावः ॥४९॥ तत्क्रोधोद्दीपनार्थमाह अयमिति अयंकीचकः बलीयान् इतितेमतिश्चेत्तर्हिभीरुंमांअन्यत्रक्वापिकुत्रचित्स्थलेनय अज्ञातवासे

दुःशासनादप्यधिकोपराधेसूतात्मजोयंननिहन्यतेचेत् आद्येकचग्राहिणिनाशितेपिसमायुषोवेणिमवेहिमांच ॥४९
अयंबलीयानितितेमतिश्चेदन्यत्रमांक्वापिनयस्वभीरुं अज्ञातवासेप्यनुभूयमानेरक्ष्यंहिशीलंगृहिणीजनानां ॥५०
श्रुत्वावधूगिरमिमांस्वपनोपनीतंशोणत्वमक्ष्णिपुनरुक्तयतोरुषापि तस्याधरोष्ठमुदवेपतनिर्गमिष्यत्क्रूराक्ष
रावलिविमर्दनशंकयेव ॥५१॥

तद्वधादि कथंकरोमीतिचेदाह अज्ञातेति हियतः अज्ञाते वासे अनुभूयमानेपि त
रुणीजनानां तरुणस्त्रीणां शीलं सदाचरणं रक्ष्यंरक्षितुंयोग्यं ॥५०॥ इमांवध्वाः द्रौपद्याः गिरं श्रुत्वा स्वपनेन निद्रया उपनीतं प्रापितं अक्ष्णिनेत्रे
शोणत्वं रक्तत्वं रुषापिक्रोधेनापि पुनरुक्तयतः द्विगुणंकुर्वतः तस्यभीमस्य अधरोष्ठं निर्गमिष्यंती या क्रूराक्षराणां आवलिः तयाविमर्दनस्य घर्षणस्य १०
शंकयेवउदवेपत अकंपत क्रोधेनोष्ठस्फुरणेक्रूराक्षराविमर्दशंकात्मकहेतूत्प्रेक्षा अन्यापिभाविघर्षणासहनशंकयावेपते वधूवाणींश्रुत्वाक्रुद्धः सन्नुवाचेतिभावः
५१

सा गभीरा दृढत्वस्यांते नरहिता मे मम गदापि तिष्ठतु मयि नियुद्धमात्रं बाहुयुद्धमात्रं निर्मिमाणे कुर्वति सति मेघवाहः इंद्रः क्क कुत्र तिष्ठेत् म
त्पुरःस्यातुं नैव शक्तो भवेदित्यर्थः मरालवाहः ब्रम्हा क्क तार्क्ष्यवाहः विष्णुश्च क्क महोक्षवाहः सदाशिवश्च क्क एतेपि मत्पुरःस्यातुं नैव शक्नुयुरित्यर्थः
॥५२॥ हिडिंबश्च किर्मीरश्च बृहद्रथभूः जरासंधश्च बकश्च आदयो येषां तेषां हत्या हननेन त्रपांबुधौ लज्जासमुद्रे तरतः मे भुजस्य निमज्जनायेव अ

गदापि सा तिष्ठतु मे गभीरा नियुद्धमात्रं मयि निर्मिमाणे क्क मेघवाहः क्क मरालवाहः क्क तार्क्ष्यवाहः क्क महोक्षवाहः ॥५२॥
हिडिंबकिर्मीरबृहद्रथात्मभूबकादिहत्यातरतस्त्रपांबुधौ निमज्जनायेव भुजस्य मे धुना सृजस्य सुकीचकसूदनोद्यमं ५३॥
तथाप्यौदास्यमेतस्मिन्ननौपायिकमेव मे क्षोदीयानपि वध्यो हि कुलस्त्रीधुङ्महीयसां ॥५४॥ ॥ ॥

मुं कीचकस्य सूदनोद्यमं वधोद्योगं सृजसि उत्पादयसि दैत्यराक्षसक्षत्रियादीनां निहननस्य मद्योग्यकर्मत्वाभावात् लज्जांबुधौ पतितस्य निमज्जनायेव क्क
तितुच्छमनुष्यसूतपुत्रवधं कथयसीति भावः ॥५३॥ तथापि एतद्वधकर्मणः अतितुच्छत्वेपि अस्मिन्कीचके औदास्यं उदासीनत्वं मे मह्यं अनौपायि-
कमेव अयोग्यमेव हि यतः महीयसां अतिमहतां पुंसां क्षोदीयानपि अतिक्षुद्रोपि कुलस्त्रीधुक् कुलस्त्रियाद्रोग्धा वध्यः वधार्हः ॥५४॥ ॥

॥गद्यं॥ अयेतन्विबहुनाउक्तेनकिं॥ पद्यं॥ तस्यकीचकस्य असृजारक्तेनयावकितोसंजात लाक्षारसरागो अंघ्रीयस्यास्तांतस्य अस्थ्नांचूर्णेनकर्पूमयः अंगरागोंगलेपनं यस्यास्तांतस्य अकीर्तिरेव मषीकज्जलरसःतेनापि अभिलिप्तेनेत्रेयस्यास्तांममवीरलक्ष्मीं अलंकारिष्ये विशेषणोक्तरीत्याप्र- साधनंकरिष्यामि तंहनिष्यामीतिभावः॥५५॥ हेप्रियेत्वंमयाइदंउक्तं वीरश्रियःशिल्पंप्रसाधनं यथार्थभावात् सत्यतयासद्यःअनुभूय मांसैरंध्रि काचार एवविनोदनंविनोदःतद्विषयेपितव अनुसारेच्छुं अनुकरणेच्छुं अवेहि जानीहि अहंराज्ञाःप्रसाधनकर्मकरोमि अयमपिश्रियःप्रसाध



॥गद्यं॥अयेतन्विकिंबहुना॥ ॥प०तस्यासृजायावकितांघ्रिमस्थ्नांचूर्णेनकर्पूरमयांगरागां अकीर्तिमष्याथवि लिप्तनेत्रामलंकरिष्येममवीरलक्ष्मीं॥५५॥वीरश्रियःशिल्पमिदंमयोक्तंयथार्थभावादनुभूयसद्यः सैरंध्रिका चारविनोदनेपितवानुसारेच्छुमवेहिमांत्वं॥५६॥त्वयापुनःश्वःस्मितपूर्ववाचाप्रत्युत्पतंत्येवकटाक्षखेलैः क्रीडांविधातुंक्रि यतामसुष्यसंकेतभूस्तांडवमंडपोयं५७

नंकृत्वामदनुकरणंकरोतीतिज्ञास्यसीतिभावः५६त्वयापुनःश्वःउत्तरदिने कटाक्षाणांखेलैःक्रीडाभिः सह प्रत्युत्पतंत्येव संमुखोद्गमनंकुर्वत्येव स्मितपूर्वया वाचा क्रीडांरतिक्रीडां विधातुं कर्तुं अयं तांडवमंडपः अमुष्य कीचकस्य संके तभूः संकेतस्थानं क्रियतां अद्य पूर्वरात्रौ अस्मिन् मंडपे एकाकिना त्वयाइष्टसिद्ध्यर्थमागतव्यं अहमप्यागमिष्यामीति संकेतःक्रिय तामित्यर्थः॥ ५७॥ ॥श्रीकृष्ण॥ ॥७॥ ॥७॥ ॥७॥ ॥७॥ ११

॥ गद्यं ॥ इति एवंप्रकारेण आश्वासितवतः पत्युः भीमस्य अनुमत्या अनुमोदनेन पुनः आगत्य नेपथ्यभवनं राज्ञाः करणीय नेपथ्यगृहं अधिशया
लोः नेपथ्यगृहे शयानाया इत्यर्थः अस्याः द्रौपद्याः चेतसः सकाशात्पलायमानस्य भयभरस्य साविभावरी रात्रिरपि सहचरी सहगमनकर्त्री बभूव त
स्याः भयं गतं रात्रिरपि गतेत्यर्थः ६ प० चपलः अस्थिरचित्तः कीचकः अन्येद्युः अन्यस्मिन्द्वितीये दिवसे एत्य समीपमागत्य पुनः तां सैरंध्रीं अब्रवीत् हे सुभ्रु सुं
दरि तुल्यनिकारस्य मया कृतत्वत्पराभवतुल्यपराभवस्य पात्रे मयि प्रसीद केलीषु रतिक्रीडासु हार्दकलहेषु स्नेहकलहेषु च केशाकृष्टिं केशेषु गृहीत्वाकर्षणं

॥ गद्यं ॥ इत्याश्वासितवतः पत्युरनुमत्या पुनरागत्य नेपथ्यभवनमधिशयालोरस्याश्चेतसः पलायमानस्य भयभरस्य
सापि विभावरी सहचरी बभूव ॥ ६ ॥ प० अन्येद्युरेत्य चपलः पुनरब्रवीत्तां सुभ्रु प्रसीद मयि तुल्यनिकारपात्रे केलीषु हा
र्दकलहेषु च केशाकृष्टिं पादाहतिं च दधती कुरु वैरशुद्धिं ॥ ५८ ॥ पंच सन्तु धवास्तेभ्यो मुंच भीतिं मयि स्थिते पंचवक्त्रे
वने दृष्टे किं चरेयुः परे मृगाः ५९ ॥ मस्तकेंजलिपद्मस्य मम संप्रति भामिनि प्रसादशंसिनं पादं प्रयच्छ सहचारिणं ॥ ६० ॥

पादाहतिं लत्ताप्रहारं च दधती कुर्वती सती वैरशुद्धिं वैरस्य प्रतीकारं कुरु ॥ ५८ ॥ ते पंच धवाः गंधर्वपतयः संतु मयि स्थिते सति तेभ्यः सकाशा
त् भीतिं मुंच त्यज वने पंचवक्त्रे सिंहे दृष्टे सति परे मृगाः चरेयुः इतस्ततः गच्छेयुः किं अपि तु भयान्नैव गच्छेयुरित्यर्थः ॥ ५९ ॥ हे भामिनि कोपे-
न संप्रति मम मस्तके अंजलिपद्मस्य सहचारिणं सखायं प्रसादशंसिनं प्रसादसूचकं पादं प्रयच्छ निधेहीत्यर्थः ॥ ६० ॥ ॥ ७ ॥ ॥ ७ ॥

॥ग॰ इत्थं अतिवेलं अत्यंतं प्रलपंतं अनर्थकं वचोवदंतं एनंकीचकंप्रतिजुगुप्सयाकुत्सयामुखस्यसाचीकरणेतिर्यक्करणेत्रपाहेतुकतांत्रपाहेतु
कमिदंमुखसाचीकरणे अभिनयंती मुखोपरिवसनांचलानयनाद्यभिनयंकुर्वतीसाकुंतीस्नुषाद्रौपदीतृषाभिभूतेवकीचकरतीच्छापराभूतेवइदं
वक्ष्यमाणंवचनंउदंचयांचकारप्रकटीचकार उवाचेत्यर्थः॥७॥अयिभद्रकल्याणकोवाजनःआरूढंरूढं अभिव्याप्यइदंजगत्त्रिभ्वंक्षद्रयितुं
दीनंकर्तुं अनिद्राणस्यसावधानस्य शंबरद्रुहःमदनस्यशासनमुद्रणायशासनपिधानायकोवाजनःद्रुह्यतिमदनाज्ञानुसरणंकोवानकरोतीत्य

॥ग॰इत्यातिवेलंप्रलपंतमेनंप्रतिजुगुप्सयामुखसाचीकरणेत्रपाहेतुकतामभिनयंतीसाकुंतीस्नुषातृष्णाभिभूतेववचनमिदं
किंचिदुदंचयांचक्रे ७ अयिभद्रजगदिदमारूढंक्षुद्रयितुमनिद्राणस्यशंबरद्रुहःशासनमुद्रणायद्रुह्यतिकोवाजनःकिंतुइयाने
वप्रस्तुतेविशेषः८प॰स्त्रीपुंसयोर्भावनटौमिथोयोःपूर्वस्तयोर्व्रीडितिरःपटेन चिरायतेस्पष्टयितुंस्वरूपंपरस्तुतन्नोत्सहतेनुमंतुं ६१

श्रीगोपालकृष्णायनमः॥ ॥ ॥ ॥ ॥ ॥ ॥

र्थःअपितुसर्वोप्यनुसरणंकरोत्येवकिंतुइयानेवप्रस्तुतेविशेषः॥८॥प॰स्त्रीपुंसयोःमिथःभावनटौपरस्परंनर्तकौस्तःतयोःपूर्वःस्त्रीभावनटःव्री
डएवलज्जैवतिरःपटःअंतर्धानपटःतेनस्वरूपंस्पष्टयितुंप्रकाशयितुंचिरायतेविलंबंकरोति परस्तुपुरुषभावनटस्तुतत्त्वविलंबकरणंअनुमंतुं
अनुमोदितुं नोत्सहते स्त्रीलज्जयास्वेच्छांचिरात्प्रकटयतिपुरुषस्तूत्सुकतयासद्यःप्रकटयतीत्यर्थः॥ ६१ ॥ ॥६१॥ ॥६१॥ १२

॥ गद्यं ॥ बहुनाउक्तेनकिं ॥ प० अद्यचतुराभिः चातुर्यपुक्ताभिः तवगीर्भिः कर्त्रीभिः तव अवाप्तेः विघ्नः मेगंधर्वाणांदंडनभयंशासनभयंउदस्यतेत्याज्य
ते तस्मात् रतिसौरव्यभराय रात्रौभीमे भयंकरे तमसि स्थितेसतिनर्तनगेहमध्यं भजस्व अत्ररात्रौ तमसि भीमे भीमसेनेस्थितेसतीत्याकूतं ॥ ६२
तत्रमंडपे तेतव तल्पांतस्यशय्यासमीपस्थलस्यसीमानं उपेयुषः प्राप्तवतः सतः तथैवलीलां क्रीडां तनवानिकुर्यां यथात्वं अंतःपुरिकाजनानां अं

॥ गद्यं ॥ किंबहुना ॥ ॥ पद्यं ॥ गीर्भिस्तवाद्यचतुराभिरुदस्यतेमेगंधर्वदंडनभयंत्वदवाप्तिविघ्नः तस्मा
द्भजस्वरतिसौरव्यभरायरात्रौभीमेस्थितेतमसिनर्तनगेहमध्यं ॥ ६२ ॥ तथैवलीलांतनवानितत्र तल्पांत
सीमानमुपेयुषस्ते भूयोयथांतःपुरिकाजनानांवक्रंनपश्येर्नपुनस्पृशेश्च ॥ ६३ ॥ ॥ ॥

तःपुरस्थस्त्रीजनानां वक्रंभूयः पुनः नपश्येः पुनर्नस्पृशेश्च ममक्रीडावैदग्ध्यमनुभूयांतःपुरस्त्रीणां तादृशवैदग्ध्याभावात् तव तासां मु
खदर्शनेच्छानैवस्यात् तथातन्मुखचुंबनार्थं स्पर्शेच्छापिनैवस्यादितिप्रकृतार्थः तयालीलांयुद्धक्रीडां कुर्यां ययाक्रीडयातवमरणेसतिपु
नरंतःपुरस्त्रीणामपिवक्रदर्शनस्पर्शनेनैव करिष्यसीत्याकूतं ॥ ६३ ॥ ॥ ६४ ॥ ॥ ६५ ॥ ॥ ६५ ॥ ॥ ६२ ॥

॥गद्यं॥एवंमृगाक्ष्याःद्रौपद्याःवचनमेवमाक्षिकंमधुतस्य क्षौद्रपटलीभूतौमधुमक्षिकावल्मीकसमूहात्मकौकर्णपुटौयस्यसःप्रमोदार्णवस्य
आनंदसमुद्रस्यजलमानुषायमाणंहृदयंमनोयस्यसःसदनं आसाद्य एत्य समालंभनंसुगंधितैलद्रव्यरसविलेपनंपूर्वंयस्यतेनसलिलाव
गाहेनजलस्नानेनविरजीकृतंनिर्मलीकृतंअंगंयेनसःअयंअंतरिवबहिरपि अवलिप्तःअंतःगर्वितः बहिश्चंदनादिलिप्तश्च ततःपरंभगवति
कमलबंधौ सूर्येनिजननयस्यकर्णस्यप्रजावत्याःभ्रातृजायायाःमनोरथस्यकीचकवधूरूपेच्छायाःसिद्धिंसंपादयितुमिवचरमसिंधौ पश्चिमसमुद्रे

॥गद्यं॥एवंमृगाक्ष्यावचनमाक्षिकस्यक्षौद्रपटलीभूतकर्णपुटःप्रमोदार्णवजलमानुषायमाणहृदयःसदनमासाद्यसमारं
भणपूर्वेणसलिलावगाहेन विरजीकृतांगोयमंतरिवबहिरप्यवलिप्तः॥ततःपरंभगवतिनिजतनुजप्रजावतीमनोरथसिद्धिं
संपादयितुमिवकमलबंधौचरमसिंधौनिमग्नेनिरुध्यमानदिविषदध्वांतेध्वांतकदंबेसंभृतसंभोगसंविधानःकीचकोनिर्वर्तितराज
भोजनपरिवेषणकृत्येनपवनसूनुनाप्रविष्टपूर्वंतदेवनर्तनगेहमगाहत॥१०॥प०कसालभंजिकेवासिमानिनिस्तंभपार्श्वगा इत्यसौ
भीमतल्पांतमाससादशनैःशनैः ६५ निमग्नेसतिसूर्यास्तेसतीत्यर्थःनिरुध्यमानःदिविषदध्वांतःआकाशमध्यभागोयेनतस्मिन्ध्वांतकदंबेत
मःसमूहेसंभृतंसंपादितंसंभोगसंविधानंतांबूलपदार्थादिसंभोगोपकरणंयेनसःकीचकःनिर्वर्तितंकृतंराजभोजनस्यपरिवेषणकृत्यंयेनतेनपवमानसू
नुनाभीमेनप्रविष्टपूर्वंआदौप्रविष्टंतदेवनर्तनगेहंअगाहतप्राविशत् ९प०हेमानिनित्वंसालभंजिकेवपुत्तलिकेवस्तंभपार्श्वगासतीकासि इत्युक्त्वाअसौ-

कीचकः भीमस्य पल्यांतं शय्यासमीपभागं शनैः शनैः आससाद प्राप ॥ ६४ ॥ गद्यं ॥ ततः बल्लवोपि पाचको भीमोपि स्नैणस्य स्त्रीकामुकस्य समुचितेन-
श्राव्यतया योग्येन कंठस्वरेण मृदुलं यथा तथा एवं वक्ष्यमाणं जगाद ॥ १० ॥ प० यस्मात् वधूशतं अंतःपुरस्त्रीशतं अनादृत्य मां अपेक्ष्य आगमः आगतोसि तत्त
स्मात् अधुना मे मनः त्वां बहिर्गतप्राणं बहिर्मार्गे विद्यमानमद्रूपप्राणं मनुते मन्यते इति प्रकृतार्थः यतः स्वस्त्रीत्यागं कृत्वा मदभिलाषं करोषि ततस्त्वां गतप्रा
णं मन्ये इत्याकूतं ॥ ६५ ॥ गद्यं ॥ एवं उक्तवते वृकोदराय भीमाय कीचकः पुनरपि मृदूनि पदानि यस्यां तां वाचं उपदां उपायनं विदधे चक्रे श्लक्ष्णां वाचमु

॥ गद्यं ॥ ततस्तं बल्लवोपि स्त्रैणसमुचितेन कंठस्वरेण मृदुलमेवं जगाद ॥ १० ॥ प० वधूशतमनादृत्य मामपेक्ष्य यदागमः त्वां ब
हिर्गतप्राणं मन्यते मे मनोधुना ॥ ६५ ॥ ग० एवमुक्तवते वृकोदराय कीचकः पुनरपि वाचं मृदुपदामुपायनमाददे ॥ ११ ॥ प० गंध
र्वानपि दयितांस्तृणाय मत्वा मामेवं रतिविधये प्रतीक्षसे यत् देवत्वादपि सुतनु त्वयाधुना मे मर्त्यत्वं जगति महत्तरं प्रकॢप्तं ६६
सुराधिकत्वेपि पदे वितीर्णे मह्यं तवास्त्येव हि कृत्यशेषः कुरुष्व मेरोरधिके कुचे मां सुधाधिकं पायय चाधरोष्ठं ॥ ६७ ॥ ॥

चेत्यर्थः ११ प० हे सुतनु दयितान् पतीन् गंधर्वानपि तृणाय मत्वा तृणसदृशान् तुच्छान् मत्वा यत् यतः रतिविधये रतिविधानार्थं एवं एकांते रात्रौ नमसि स्थिता मां
प्रतीक्षसे तत् तस्मात् अधुना देवत्वादपि मे मर्त्यत्वं मनुष्यत्वं जगति महत्तरं अतिशयेन श्रेष्ठं कॢप्तं हि कृतमेव ६६ त्वया मह्यं सुराधिकत्वपदे वितीर्णे दत्तेपि तव कृत्यशे
षः कर्तव्यशेषः अस्त्येव हि प्रसिद्धं कृत्यशेषमेवाह मेरोः विपुलतया सुवर्णतया च अधिके कुचे मां कुरु सुधाधिकं अधरोष्ठं पायय प्राशय च महापददानेतदनुरूपाः पदार्थदे
या इति भावः ६७

प०स: भीमः इत्थंससांत्ववचनोदयंसांत्ववचनाविर्भावसहितंयथातथा अर्धमंचंमंचकस्यार्धआरोढुंआनमिता पूर्वतनुःकटेरूर्ध्वशरीरंयेनतस्यशत्रोःकीचकस्य
निटिलसीम्नि भालदेशे धात्राब्रम्हणादत्तांआयुषःलिपिंअक्षरविन्यासंशिथिलयन्निवशिथिलांकुर्वन्निवमुष्ट्या आहृतिं प्रहारंचकार ६८ गंभीरंधैर्ययुक्तंचेतोय
स्यसः कीचकोपिगंधर्वबुध्या एनंप्रति हंतुंसद्यः तदानीमेव भविन्त्र्याः शवतायाः प्रेततायाः दशायाः अवस्थायाः साधारणीमेवतुल्यामेवमुष्टिंबबंधचकार इदा
नींप्रहारार्थयामुष्टिर्बध्यतेसैवमरणदशायांस्थास्यतीतिभावः ६९ तौभीमकीचकौनिशिनियुद्धकेलिंनिर्मिमातेनिर्मितवंतौ कीदृशौतौ परस्परंप्रतिजवंवेगंभ

इत्थंससांत्ववचनोदयमर्धमंचमारोढुमानमितपूर्वतनोःसभीमः मुष्ट्याहृतिंनिटिलसीम्निचकारशत्रोरायुर्लिपिंशिथिलयन्निवधातृ
दत्तां ६८ गंभीरचेताःसचकीचकोपिगंधर्वबुध्याप्रतिहंतुमेनं सद्योभविन्त्र्याःशवतादशायाःसाधारणीमेवबबंधमुष्टिं ॥ ६९ ॥ जवं
भजंतौजयतर्षवंतौरुषंवहंतौरुधिरंकिरंतौ परस्परंतौपटुशब्ददंतौनियुद्धकेलिंनिशिनिर्मिमाते ॥ ७० ॥ अक्ष्वेलितारावम-
वीरवादमवीक्षकश्लाघनचाटुगुंफं अनुच्चनिश्वासमहुंक्रियाकमभूतपूर्वंतदभून्नियुद्धं ॥ ७१ ॥ जंतौजयस्यतर्षः तृष्णा सा

स्तिययोस्तौरुषंरोषंवहंतौरुधिरंकिरंतौवर्षंतौपटुशब्दाः व्यक्तशब्दाःदंताःययोस्तौ ७० तत्नियुद्धंबाहुयुद्धंअभूतपूर्वंपूर्वंनभूतंएतादृशंअभूत्जातंअपूर्वत्व
मेवाह नविद्यतेक्ष्वेलितारावःसिंहनादोयस्मिन्तत् नविद्यतेवीरवादःमत्पुरस्त्वंकइत्यादिवीरवादोयस्मिन् नविद्यतेवीक्षकाणांयुद्धचमत्कारद्रष्ट्रृणांश्लाघन १५
चाटुगुंफःस्तुतिरचनायस्मिन्तत् नविद्यतेउच्चनिश्वासोयस्मिन्तत् नविद्यतेहुंक्रियाप्रहारसमयेहुंकारोयस्मिन्तत्युद्धशब्दश्रवणेनलोकमेलनभयात्निःशब्दंयुद्धकृ
तमितिभावः ७१ ॥

चित्तजचापं मदनधनुःपुष्पंचजुष्टं सेवितंयैस्तैःशिलीमुखैःबाणैःभ्रमरैश्चदत्तानिरंध्राणिक्षतानिचनिजांगेदधत् समी[illegible]

नर्त्तविधूनितोपिसःकीचकःसूतपुत्रश्चवेणुविशेषश्चकिंचिदपिनैवचुकूजनैवशब्दंकृतवान् अत्रप्रकृताप्रकृतश्लेषालंकारःअत्रापिकूजनाभावेलोकमे

लनभयंकारणं ॥७२॥ बककैवेरिणःभीमस्यमुष्ट्याहतेताडितेतस्मिन्कीचकेपतितेसतितेनरंगेणनृत्यमंडपेनचलंत्यःपताकाःयस्मिन्कर्मणियथाभव

तितथासमकंपिकंपितं रंगमुत्प्रेक्षते उत्तराद्यैःकन्याजनैःपार्थात् अर्जुनात्चिरेणबहुकालंपरिशीलितंअभ्यस्तं नाट्यंनृत्यंअभिविडंबयतेव अनुक

शिलीमुखैश्चित्तजचापजुष्टैर्दत्तानिरंध्राणिदधत्तन्निजांगे समीरजातेनविधूनितोपिसकीचकोनैवचुकूजकिंचित् ७२

तस्मिन्हतेनिपतितेबककैवेरिमुष्ट्यारंगेणतेनसमकंपिचलत्पताकं पार्थाच्चिरेणपरिशीलितमुत्तराद्यैःकन्याजनैरभिविडंबयतेवना

ट्यं७३ग०तत्रमंडपेपिंडतयाकृतंतस्यदस्योस्तरसंतरसाविलोक्यप्रहर्षवत्यापार्षत्याश्लाघापूर्वमाघ्रातभुजःकुरुव्याघ्रोनिर्गत्ययथा

पुरमविकृतमानसोमहानसोदरंप्रविश्यसुखेनाधिशिश्ये १२

रणंकुर्वतेव७३ग०तदनुतस्मिन्मंडपेपिंडतयाकृतंपिंडीकृतंतस्यदस्योःशत्रोःतरसंमांसं

तरसावेगेनविलोक्यहर्षवत्यापार्षत्याद्रौपद्याश्लाघापूर्वंयथातथाआघ्रातःभुजोयस्यसःकुरुव्याघ्रःकुरुश्रेष्ठःभीमःअत्रव्याघ्रपदेनक्रूरकर्मकारित्वंव्यज्यते

निर्गत्यमंडपाद्बहिरागत्ययथापुरंयथापूर्वंअविकृतंरोषभयादिरहितंमानसंयस्यतथाभूतःसन्महानसोदरंपाकशालामध्यंप्रविश्यसुखेनअधिशिश्येनिद्रांचकार १२

प॰ मानिन्यपि सैरंध्र्यपि तत्र मंडपे शत्रुं कीचकं निपात्य पातयित्वा भीत्येव भयेनेव चलः अग्रपाणिः कराग्रं यस्यास्तथा सती चक्रंद आर्तस्वरं चकार ततआ
क्रंदनं निशम्य श्रुत्वा किं किमिति ब्रुवाणाः वदंतः सर्वेपि तस्य कीचकस्य अवरजाः कनिष्ठबंधवः समीयुः संघीबभूवुः ७४ आत्तशोकाः स्वीकृतशोकाः
अमी उपकीचकाः मृत्युरेव द्विपः गजः तस्य पिधानं पिंडमिव आछन्न भक्ष्यपिंडमिव तं भ्रातरं कीचकं विलोक्य ज्यायानिव ज्येष्ठभ्रातेव तां स्थलीं मंडप

प॰ निपात्य मालिन्यपि तत्र शत्रुं चक्रंद भीत्येव चलाग्रपाणिः निशम्य तत् किं किमिति ब्रुवाणाः सर्वेपि तस्यावरजाः समेयुः ७४
विलोक्य तं भ्रातरमात्तशोका मृत्युद्विपस्येव पिधानपिंडं ज्यायानिवामी विदधुः स्थलीं तामस्रेण गुल्फद्वयसीं निजेन ७५ ग॰
ततस्ते सोदरविपत्तिनिमित्तमियमेवेति रोषरूषितचेतसो निवेशितशवपिंडभरस्य मूर्तैर्भीमसुष्टिभिरिव नारिकेलफलै
रुपबध्यमानस्य चरमविमानस्य स्तंभदारुणि संदानितां कौंतेयसीमंतिनीं तिमिरसुंदरसौदामिनीभिः करदीपिकाभिः दी
यमानचंक्रमावकाशेन पितृवनमुपनीय स्वकीयविवेकसंपत्या सहन्वित्यामत्याक्षुः ॥ १२ ॥ मध्यस्थलीं निजेन अस्रेण नेत्राश्रुणा रक्ते
न च गुल्फद्वयसीं गुल्फप्रमाणां विदधुः चक्रुः यथा भ्रातुः रक्तं गुल्फप्रमाणं पतितं तथोपकीचकानां दुःखेनाश्रु पतितमिति भावः ॥ ७५ ॥ ग॰ ततः ते उ
पकीचकाः सोदरविपत्तेः भ्रातृमरणस्य निमित्तं कारणं इयमेव इति रुषा रोषेण रूषितं कलुषितं चेतो येषां ते तथाभूताः संतः निवेशितः स्थापितः श
वपिंडभारो यस्मिन् तस्य मूर्तैः भीमस्य मुष्टिभिरिव नारिकेलफलैः उपबध्यमानस्य ग्रथ्यमानस्य चरमविमानस्य श्मशानं प्रति[illegible]

मानस्य पार्श्वस्तंभदारुणि संदानितां बध्वां कौंतेयसीमंतिनीं द्रौपदीं तिमिराण्येव तमांस्येव सुदिशाः मेघाः तेषां सौदामिनी... शाभिरित्यर्थः करदीपिकाभिः दीयमानः चंक्रमावकाशोगमनावसरो यस्मिन् तेन पथा मार्गेण पितृवनं श्मशानं उपनीय स्वकीयया अविवेकसंपत्त्या कर्तव्याकर्तव्यविचारसंपत्त्या सह चित्यां शवदाहार्थं कृतकाष्ठरचनायां अत्याक्षः चिक्षिपुः द्रौपद्या सह कीचकदाहार्थं चित्यां विमानं चिक्षिपुरित्यर्थः १३

॥ गद्यं ॥ तावदेषा चकितचकित ह्रानाथ जगत्प्राणभूत विपत्समय बंधो संप्रति कांतां रसवतीं परिगृह्य मुग्धामिमां कथं न गणयसीत्युच्चैरेरोदीत् ॥ १४ ॥ ॥ ॥ ॥ ॥ ॥

॥ गद्यं ॥ यावत् शवेन सह बध्वा नीयते तावत् चकिता चकिता अतिभीता एषा द्रौपदी ह्रानाथ जगति प्राणभूत मत्प्राण स्वरूप अथवा जगत्प्राण भूतवायुजात भीम विपत्समये बंधो रक्षक संप्रति कांतां मनोहरां रसवतीं पाकशालां शृंगारादिरसयुक्तां कांतां भार्यां च रसवत्यां तु पाकस्थान महानसे इत्यमरः परिगृह्य मुग्धां अज्ञां इमां मद्रूपां कथं न गणयसि इत्युक्त्वा उच्चैः अरोदीत् ॥ १४ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

अथतत्रनगरे अस्याः द्रौपद्याः रुदितस्वैनैः जवात् आकारितः आहूतः मारुतिः भीमः सक्थ्नोः ऊर्वोः वायुबलात् गमनवेगजन्यवायुसामर्थ्यात् अलम्
तमहसांज्वलत्काष्ठतेजसां ईषल्लभानिलब्धुंशक्यानि यानिउन्मीलनानितैः कृत्वागारुडभित्तिभंगस्य हरिन्मणिभित्तिरचनायाः पिशुने सूचके तत्स
दृशे इत्यर्थः ध्वांतेपिद्विषांशत्रूणांउपकीचकानां ओघं समूहं ज्येष्ठस्यभ्रातुः कीचकस्य अध्वनि यमनगराध्वनि धावितुंशीघ्रगत्याभ्रातृसंगंविधातुंदो
र्दर्पएव बाहुबलमेवसित्थांजनानितैः दिव्यादृष्टिर्यस्यतथाभूतमकरोत् भीमस्तानपिसर्वान् जघानेतिभावः ॥७६॥ सः वीरः भीमः अरण्यतलेउत्पात

पद्यं॥ तत्रास्यारुदितस्वैनैरथजवादाकारितोमारुतिः सक्थ्नोर्वातबलादलातमहसामीषल्लभोन्मीलनैः ध्वांतेगारुडभि
त्तिभंगिपिशुनेप्योघंद्विषांधावितुंज्येष्ठस्याध्वनिदिव्यदृष्टिमकरोद्दोर्दर्पसित्थांजनैः ७६ निपातितान् स्वेन निरीक्ष्यतत्रसूतान्
सवीरः सुमनायतेस्म उत्पातमुद्रांदधतास्वपित्रातरूनिवारण्यतलेविरुग्णात् ॥७७॥ गंधर्वभीरुषुजनेष्वितरेषुतत्रविष्वक्प
लायनपरेषुविमुक्तबंधा कृष्णाचकीचकरिपुश्चकृतप्रशंसावन्योन्यमभ्यगमतांनगरंपुनस्तौ ॥७८॥

मुद्रांउत्पातस्वरूपंदधता
स्वपित्रा वायुना विरुग्णान् भग्नान्तालानिव तालवृक्षानिव तत्रश्मशाने स्वेन आत्मनानिपातितान् सूतान् उपकीचकान् निरीक्ष्यसुमनायतेस्म
स्वस्थचित्तोबभूव ॥७७॥ तत्रश्मशाने गंधर्वेभ्यः भीरुषु इतरेषु जनेषु विष्वक् आसमंतात्पलायनपरेषुसत्सु विमुक्तः बंधोयस्याः साकृष्णाद्रौप
दीकीचकरिपुः भीमश्चतौ अन्योन्यं परस्परं कृतप्रशंसौ संतौपुनः नगरमभिनगरमभिमुखंअगमतांगतवंतौ ॥७८॥ [illegible]
नमितिभावः ॥७१॥



१६

ग॰ ॥ ततः क्षणादेव संध्यायाः अरुणिम्नारागेण कृत्वा करबितन आदृतेन अंबरमणिबिंबेन परिचुंब्यमाने पुंक्ते शंबायुधस्य इंद्रस्य हरिदंगणे पूर्वदि
ग्भागे परितः सर्वतः रुधिराणां वीचीः मुंचति यस्तेन पिशितपिंडेन मांसपिंडेन कृतानुषंगं कृतसंबंधं रंगं विडंबयति अनुकुर्वति सूर्योदये सतीत्यर्थः सु
चा शोकेन निरस्ताः त्यक्ताः मौलयः उष्णीषादयो यैस्तैः निर्गलितवाग्भिः भाषणरहितैः निष्यंदतनुभिः अचंचलदेहैः निखिलैः संपूर्णैरपि पौरैः पुरवासिज
नैः नृपतेः निलयद्वारं गृहद्वारं निबिडितं सांद्रं अभूत् रात्रौ जातं गंधर्वकृतकीचकवधादिवृत्तांतं श्रुत्वा कथं जातमिति द्रष्टुं भयेन सर्वे जना राजद्वारि मिलिताः इ

गद्यं ॥ ततः क्षणादेव संध्यारुणिमकरंबितेनांबरमणिबिंबेन परिचुंब्यमाने शंबायुधहरिदंगणे परितो रुधिरवीचिमुचापि पिशितपिं
डेन कृतानुषंगरंगं विडंबयति सति शुचा निरस्तमौलिभिर्निर्गलितवाग्भिर्निष्यंदतनुभिर्निखिलैरपि पौरैर्नृपतिनिलयद्वारं निबिडित
मभूत् १५ ॥ प॰ वध्वस्तदा मंडलशो निविष्टा रुंधद्भिराशा रुरुदुर्विलापैः महत्सु दुःखेष्वपि जृंभितेषु मालिन्युपालंभनमस्पृशद्भिः ७९
तस्मिन्दिने सन्निधिमागता सा कृष्णा दृशं केकयराजपुत्र्याः मषीशलाकार्पणया विनापि मंदेतरामश्रुकणैरकार्षीत् ॥ ८० ॥

तिभावः १५ प॰ ततः मंडलशः मंडलाकारेण निविष्टाः निषण्णाः वध्वः कीचकानां भार्याः आशाः दिशः रुंधद्भिः रुंधानैः महत्सु दुःखेषु जृंभितेषु वृद्धिंगतेष्वपि मा-
लिन्याः सैरंध्र्याः उपालंभनं निंदां अस्पृशद्भिः दुर्विलापैः सद्भिः रुरुदुः ७९ तस्मिन्दिने सन्निधिं आगता सा कृष्णा द्रौपदी केकयराजपुत्र्याः सुदेष्णायाः दृशं मषीश
लाकायाः कज्जलरसशलाकायाः अर्पणया समर्पणेन विनापि अश्रुकणैः अश्रुबिंदुभिः मंदेतरां समृद्धां अकार्षीत् प्रतिदिनं सुदेष्णायाः दृगश्रुबिंदूनां कज्जल

शलाकार्पणं कारणं तस्मिन्दिने कीचकवधानिमित्तसैरंध्रीदर्शनं कारणं जज्ञे इति भावः ॥ ८० ॥ तावत्ते युधिष्ठिरमुखा अपि करणीयार्थस्यसित्थ्यर्थं अमुकस्थाने अमुककाले त्वया आगंतव्यं मयाचागम्यते इत्यादिभाषणेनकृतः स्थानादिनियमः संकेतः सएवशैलः तं अधिरुह्यनिशश्वसुः द्रौपदी विपत्तिदर्शनजन्यदुःखेननिश्वासंतत्यजुः कीदृशंसंकेतशैलं वातजातेनभीमेनव्याधूतं हतं यत् कीचककुलं तेन आकुलः व्याप्तः कोटिभागः अग्रभागोयस्यतं वातजातेनवातसमूहेन व्याधूतंभग्नंयत्कीचककुलं वेणुवृंदं तेन आकुलः कोटिभागः उपरितनभागोयस्यतं निर्यती दुःखात् निर्गच्छं

तावद्युधिष्ठिरमुखा अपि वातजातव्याधूतकीचककुलाकुलकोटिभागं निर्यत्प्रियानयनवारिझरीपरीतं संकेतशैलमधिरुह्य निशश्वसुस्ते ॥ ८१ ॥ तदनुविदितवार्तो धार्तराष्ट्रेश्वरेभ्यः शुभगुणचरितेभ्यः सूतजानांशतस्य वसतिमरिजनानां मात्स्यभूपालपुर्यां हृदयमुकुरलग्नैर्हेतुभिर्निश्चिकाय ॥ ८२ ॥ ॥ ॥

ती प्रियायाः द्रौपद्याः नयनवारिझरी तयापरीतं युक्तं शैलोपिवारिझरीपरीतोभवति ॥ ८१ ॥ तदनु शुभाः गुणाः सत्यभाषणादयः चरितानि अव्यभिचरितकर्माणि येषां तेभ्यः चरेभ्यः चारेभ्यः सकाशात् सूतजानां शतस्य विदितावार्ता वधादिवृत्तांतोयेनसः धार्तराष्ट्रः दुर्योधनः मात्स्यभूपालपुर्यां विराटनगरे अरिजनानां पांडवानां वसतिं हृदयमुकुरलग्नैः चित्तात्मकादर्शप्रतिबिंबितैः हेतुभिः कीचकवधदेशासमृत्यादिभिः कारणैः निश्चिकाय निश्चयं कृतवान्

अन्येद्युः वार्ताश्रवणात् द्वितीयदिने कुरूणां अधिपः दुर्योधनः अंगेश्वरसौबलिभ्यां कर्णशकुनिभ्यां सह गोष्ठीं सभां आस्थाय अधिष्ठाय भीष्मादि-
मान् भीष्मप्रमुखवान् बंधुजनान् आप्तजनान् विलोक्य गंभीरं यथा तथा एवं वक्ष्यमाणां गिरं बभाषे ॥ ८३ ॥ ग० भोभो भवतामपि इदं वक्ष्यमाणं विदितं किं
ज्ञातं खलु मात्स्यपुरे विराटनगरे कामपि कामिनीं कामयमानः इच्छन् कीचकः निशि रात्रौ तस्याः कामिन्याः पतिभिः अदृश्यैः पंचभिर्गंधर्वैः अनुरहसि
एकांते स्वेषां संख्यापदस्य पंचत्वस्य अभिधेयतां मरणरूपार्थतां अनीयत नीतः हत इत्यर्थः ॥ १६ ॥ पुनरपि तस्यै कामिन्यै द्रुह्यंतः तदनुजाः कीचक

अन्येद्युरंगेश्वरसौबलिभ्यामास्थाय गोष्ठीमधिपः कुरूणां भीष्मादिमान्बंधुजनान्विलोक्य गंभीरमेवं गिरमाबभाषे ८३
ग० भोभो विदितं किं भवतामपीदं संप्रति खलु मात्स्यपुरे कामपि कामिनीं कामयमानः कीचको निशि तस्याः पतिभिरदृश्यैः पंचभिर्गं
धर्वैरनुरहसि स्वसंख्यापदाभिधेयताम् अनीयत १६ तस्यै पुनरपि द्रुह्यंतस्तदनुजा अपि तथैवेति काचिदियं किंवदंती कर्णात्कर्णमधि
रोहति १७ एवं चेदसंशयं सा चतुष्पथमंडपिकास्तंभसालभंजिकेव सर्वकरावमर्शभाजनं पांचालसुता १८ कनिष्ठबंधवोपि तथै

व अदृश्यैः पतयैव तैर्हताः इति काचिदियं किंवदंती जनवार्ता कर्णात्कर्णमधिरोहति आगच्छति केनचित् कस्यचित्कर्णे उक्तं तेन अन्यस्येति प्रकारेण
मत्कर्णं प्राप्तेत्यर्थः ॥ १७ ॥ एवं चेत् इत्थमस्ति चेत्तर्हि असंशयं सा कामिनी चतुष्पथमंडपस्तंभसंबंधिनी सालभंजिकेव सर्वकरावमर्शस्य सर्वेषां करस्पर्शस्य भा
जनं पात्रं पांचालदुहिता द्रौपदी यथा चतुष्पथमंडपस्थसालभंजिकायाः सर्वैः करस्पर्शः क्रियते तथास्या अपीत्यर्थः एवं च इयं सर्वजनसाधारणेति भावः ॥ १८ ॥ ॥

तेपांडवाअपिपुनः अज्ञातवासिनः परेतपतिः यमः पवमानः वायुश्च पाकशासनः इंद्रश्च अश्विनौ अश्विनीकुमारौचतेषांपारस्त्रैणेयाः परस्त्रियांभवाः पुत्राः तस्याः पतिविडंबकाः पतित्वानुकरणशालिनः तेषु पंचस्वपिद्वितीयेनैव बाहुशालिनाबलीयसावधूद्रुहांनिहंत्राकीचकानांवधकारिणाभवितव्यं १९ अहो इत्याश्चर्ये सर्वत्रसर्वस्थलेषुविश्रृंखलं अप्रतिबंधं अमीषांपारस्त्रैणेयानांदोः शील्यम् दुःस्वभावत्वं २०॥ तथाहिदोः शील्यंसमर्थयति॥ प॰ देशेज रासंधमुखैः व्यरुंधन् विरोधंचक्रुः वनेपिकिर्मीरहिडिंबौमुख्यौयेषुतैः जटासुरादिभिः व्यरुंधन् गूढेनिवासे अज्ञातवासेपिसूतपुत्रैः कीचकैः व्यरुंधन्

तेपिपुनरज्ञातवासिनः परेतपतिपवमानपाकशासनाश्विनांपारस्त्रैणेयास्तस्याः पतिविडंबकाः तेष्वपिद्वितीयेनैवबाहुशालिना वधूद्रुहांनिहंत्राभवितव्यं १९ अहोसर्वत्रविश्रृंखलममीषांदोःशील्यं॥ २०॥ तथाहि॥ प॰ देशेजरासंधमुखैर्व्यरुंधन्वनेपिकिर्मीर हिडिंबमुख्यैः गूढेनिवासेपिचसूतपुत्रैः क्वनुस्थितास्तेकलहंविनान्यैः ८४ ग॰ अत्रैवस्थित्वावेषांतरकंचुकैरकिंचनैरेतैर्वंचि तः खलुदृष्टोविराट इत्यभिधायसुयोधनोराधेयेनसहकृतहस्ततालोवल्गद्भुजशिखरमुच्चैर्जहास॥ २१॥ तस्मात्तेकलहंविना

क्वनुस्थिताः सर्वत्रकलहेनैवस्थिताइतिभावः॥ ८४॥ ग॰ अत्रैवविराटनगरेएवस्थित्वावेषांतरं कंचुकं आच्छादकंयेषांतैः अकिंचनैः दरिद्रैः एतैः
पांडवैः वंचितः खलुनिश्चयेनविराटः इत्यभिधायसुयोधनः राधेयेनकर्णेनसहकृतः हस्ततालः तद्धस्तोपरिस्वहस्तताडनंयेनतथाभूतः सन् वल्गंती १८
चलंती भुजशिखरे स्कंधौयस्मिन्कर्मणियथाभवतितथाउच्चैः जहास अन्योपि अतिहर्षसतिस्वमित्रेणहस्ततालंकरोति॥ २१॥ ॥९॥

ततः तस्मात्॥ पद्यं॥ मत्स्यनृपतेः नगरस्य विराटनगरस्य संक्षोभे लुंठनादिना उपसर्गे सति स्वयं आत्मनैव योद्धुं निर्गतान् तान् पांडवान् दृष्ट्वा अवकीर्णि
नः अज्ञातवासव्रतात् भ्रष्टान्चिंतनुमः कुर्मः अधुना अद्यैव त्वं पुरः आदौ गच्छ विराटनगरमिति शेषः इति कुरु भूभुजा दुर्योधनेन सदसि उक्तः त्रिगर्तानां
ईश्वरः सुशर्मा गाः धेनुवृषभादीन् हर्तुं तस्य विराटस्य पुरीमवाप कः कामिव यथा दिनावधिः सूर्यास्तमयः अर्यम्णः सूर्यस्य गाः किरणान् हर्तुं प्रतीचीं दिशं

॥ततः॥ पद्यं॥ संक्षोभे नगरस्य मत्स्यनृपतेर्योद्धुं स्वयं निर्गतान् दृष्ट्वा तानवकीर्णिनो व्चिंतनुमो गच्छाधुना त्वं पुरः इत्युक्तः कुरुभू
भुजा सदसि गा हर्तुं त्रिगर्तेश्वरस्तस्यैवाप पुरीं दिनावधिरिवार्यम्णः प्रतीचीं दिशं॥ ८५॥ ग० तत्र दक्षिणेन पुरं व्यग्रतरसैन्येन काल्य
मानं क्वचिदरुणतया निमग्नजमदग्निकुमारोष्णनिश्वासवेगविलुलितवीचीप्रपंचमिव स्यमंतकपंचकं क्वचिन्नीलतया मंदकंडूलवेतंड
शुंडाविधूनितविटपमालमिव सालवनं क्वचित्स्थवलतया मंदरगिरिमंथनपरिक्षोभितफेनकूटमिव क्षीरोदमध्यमुन्नमितलांगूलमुद्र
मितहुंकारमुल्लसितधूलीकमुद्दामघंटारवं गोधनं निशाम्य सेनाकुंभिकुलगंभीरबृंहितारंभैर्मंदिराग्रसिंहप्रतिच्छंदवृंदमुखकंदरमौ
ननियमं विभिंदन्ननुकूलपवमानपुरोनाटितपटैर्वैरिभटजीवितहरणाय वैवस्वतमिवाह्वयद्भिः केतनदंडैः परिमोटितगगनतटिनी
तटविटपिवाटो विराटो परणप्रयाणारंभटीमटीकत॥ २२॥
अवापत द्दूत् अनयोपमया सूर्यास्तमये प्राप्त इति गम्यते॥ ८५॥ गद्यं॥ तत्र अस्त
मये पुरं दक्षिणेन पुरस्य दक्षिण दिग्भागे व्यग्रतरं गोग्रहणे त्वरमाणं सैन्यं यस्य तेन सुशर्मणा काल्यमानं रुध्वा बलान्नीयमानं गोधनं गोसमुदायं निशम्य

श्रुत्वाविराटोपरणप्रयाणस्ययुद्धविषयेगमनस्य आरभटींउद्योगं अदीकृत्यचकारेत्यर्थः कथंभूतंगोधनं क्वचित्कस्मिंश्चिद्भागे अरुणतयाधेनूनांलोहिततयाभिम
ग्नः रुधिरह्रदेस्नानार्थंमग्नः यः जमदग्निकुमारः परशुरामः तस्यउष्णनिश्वासस्यवेगेनलुलितः इतस्ततःप्रसृतः वीचीप्रपंचः ऊर्मीसमुदायोयस्यतत् स्यमंतकपंच
कमिव क्षत्रियरुधिरकृतह्रदपंचकतीर्थमिव क्वचिद्भागेनीलतया धेनूनांकृष्णतयामदेन कंडूलाः कंडूविशिष्टाः येवेतंडाः गजाः तैः शुंडाभिः
विधूनिताकंपिता विटपमाला शाखासमूहोयस्यतत् सालवनमिव तमालादिवृक्षवनमिव क्वचिद्भागेधवलतया धेनूनां शुभ्रतया मंदरगिरेः
प्रमथनेन परिक्षोभितः इतस्ततः पतितः फेनकूटः फेनसमूहोयस्यतत् क्षीरोदस्य क्षीरसमुद्रस्य मध्यमिव उन्नमितं ऊर्ध्वीकृतं लांगूलंयेनतत्
उद्भमितः आविष्कृतः हुंकारोयेनतत् उल्लसिताखुरैःउत्क्षिप्ता धूलीयेनतत् उद्दामाः महांतः घंटारवाः यस्मिन्तत् कथंभूतोविराटः सेनायाः
कुंभिकुलस्य गजसमूहस्य गंभीराः येबृंहितारवाः हस्तिजातिशब्दाः तैः कृत्वा मंदिराग्रेषु नगरगृहाग्रेषु सिंहप्रतिच्छंदानांसिंहप्रतिमानांवृंद
स्यमुखकंदराणां मुखबिलानां मौननियमं विभिंदन् समापयन् अनुकूलः उत्तरदिग्भागात् पृष्ठतोवहमानः यः पवमानः वायुः तेनपुरः अग्र
भागेदक्षिणदिगभिमुखं नाटिताः चालिताः पटाः येषुतैः अतएववैरिभटानांजीवितहरणाय वैवस्वतंयमं आव्हयद्भिरिव आव्हानाभिनये
न आकारयद्भिरिव केतनदंडैः ध्वजदंडैः कृत्वापरिमोटितः भंजितः गगनतटिन्याः आकाशगंगायाः तटविटपिवाटः तीरवृक्षसमुदायोये
नसः ॥ २२ ॥ ॥ ॥श्रीकृष्ण॥ ॥ ॥राधाकृष्ण॥ ॥ ॥गोपालकृ॰
॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥

संख्याय युद्धाय यानेषु वाहनेषु समारुरुक्षां केलीं समीचीनां आरोढुमिच्छया क्रीडां स्पृशांति स्वीकुर्वंति येषां कीचकस्य बांधवानां कुलजानां अश्वप्र-
संगेपि अयंगंधर्वःसमीचीनः अयंनीलोगंधर्वोधवलंगंधर्वं आरोक्ष्यामीत्याद्यश्वोद्देशेनाप्यभिधीयमानः केनचिदुच्चार्यमाणःगंधर्वशब्दः गरलायते-
स्म विषवद्बभूव यथाविषभक्षणं शरीरदाहादिकरोतितद्वच्छब्दाकर्णनं मनःसंतापाद्यकरोदितिभावः॥८६॥ धीरः सः विराटः सभ्यैः सभासदैः सूदैः ब
ल्लवैश्चतुरंगिभिः अश्वारोहैश्च पौरैःगोपालैश्चविज्ञापितःराज्ञोनिवेदितःवीर्यभूमा शौर्यबाहुल्यं येषां तान् धर्मभीमनकुलसहदेवान् पुरोधाय अग्रतः

॥पद्यं॥ संख्याययानेषुसमारुरुक्षाकेलिस्पृशांकीचकबांधवानां अश्वप्रसंगेऽप्यभिधीयमानोगंधर्वशब्दोगरलायतेस्म॥८६
सभ्यैश्चसूदैश्चतुरंगिभिश्चपौरैश्चविज्ञापितवीर्यभूम्नः दंतानिवेंद्रद्विरदःसपार्थान्धीरःपुरोधायरुरोधशत्रुं॥८७ तृणकल्प
मपित्रिगर्तभूपंतमुपेक्ष्यैवतदागवांकुलानि सहदेवविलोकमात्रहर्षात्सहसामात्स्यचमूसमीपमापुः॥८८॥

रुत्वा शत्रुं रुरोध कः कानिव यथा इंद्रद्विरदः ऐरावतः दंतान् चतुरो दशनान् पुरोधाय शत्रुं रुणद्धि तद्वत्॥८७॥ तदा युद्धारंभे गवांकुलानि तृण
कल्पमपि तृणतुल्यमपि तंत्रिगर्तभूपं सुशर्माणं उपेक्ष्यैव सहदेवस्य विलोकनमात्रेण दर्शनमात्रेण योहर्षः तस्मात् सहसा बलेन मात्स्यपुरीस-
मीपं विराटपुरसमीपं आपुः अन्योपि स्वभक्ष्यं उपेक्ष्यैवेष्टं प्रतिगच्छति॥८८॥ ॥७॥ ॥७॥ ॥७॥

अथमौर्व्याः गुणाएवकुशाःतैः अंकिताः युक्ताः कराः ययोस्तौबत्धेपंक्ती याभ्यांतौ मत्स्यत्रिगर्ताधिपयोःविराटस्फशर्मणोः अनीकौसेने आ
ध्माताः मुखवायुभिः पूरिताः येशंखाः तेषांनिनदः शब्दएवप्रणवः ॐकारः प्रधानः अग्रसरोयस्मिन्तत् आयोधनंयुद्धमेव अध्ययनं वेदाध्यय
नं आरभेतां आरंभंचक्रतुः यथाकुशपाणयोब्राह्मणाः अभिमुखपंक्तीभ्यांस्थित्वाॐकारोच्चारणपूर्वकं वेदंपठंतितद्वत् ज्याहस्ताभटाः शंख

मौर्वीकुशांकितकरावथबत्धपंक्तीमात्स्यत्रिगर्तवस्फधाधिपयोरनीकौ आध्मातशंखनिनदप्रणवप्रधा
नमायोधनाध्ययनमद्भुतमारभेतां ८९ ॥ मत्स्येंद्र मंदिरमहानसभक्ष्यवृंदस्वच्छंदभक्षणरहस्यवदा
वदेन क्ष्वेडारवेणवलल्लस्यतदारिपूर्णांचित्तंनकेवलमकंपिदिशोदशापि ॥ ९० ॥ ॥ ॥

शब्दपूर्वयुत्धारंभंचक्रुरित्यर्थः ॥ ८९ ॥ मत्स्येंद्रमंदिरस्यविराटगृहस्ययत्महानसंपाकशालातत्संबंधिनः भ क्ष्यवृंदस्यलड्डुकशष्कुल्यादिसमूहस्ययत्
भक्षणंतस्यरहस्यस्यवदावदेनवक्त्रावलल्लस्यबल्लवस्यभीमस्यक्ष्वेडारवेणसिंहनादेनतदायुद्धारंभेकेवलंरिपूर्णांचित्तंन अ कंपिनकंपितंअपितुदश-
दिशोपिकंपिताः एतादृशोमहान्कठोरोबल्लवस्यसिंहनादस्तस्माद्विराटगृहेघृतशर्कराढ्यभक्ष्यवृंदभक्षणेनबलाढ्योस्तीतिज्ञायतेइतिभावः ॥ ९० ॥ ॥

समरस्यउदये प्रारंभे उभयेषांसैनिकानां असिधेनवः छुरिकाःनिखिलं संपूर्णं निजनामपदस्य असिधेनुइति शब्दस्ययत् अपरार्धं धेनुइतिउत्त-
रार्धं तस्यवाच्यं गोधनरूपार्थं ग्राहयितुं अपहारयितुं रक्षितुंच चवल्गुः चंचलाबभूवुः सुशर्मणःसैनिकानां असिधेनवोखिलधेनूरपहारयितुं
विराटस्यसैनिकानांताःरक्षितुमित्यर्थः ॥ ९१ ॥ यावत् युद्धप्रारंभोभवति तावत् अहर्धीश्वरस्य सूर्यस्य तुरंगः अंबरपथात् आकाशमार्गा

उदयेसमरस्यसैनिकानामुभयेषामसिधेनवोववल्गुः निजनामपदापरार्धवाच्यंनिखिलंग्राहयितुंच
रक्षितुंच ॥ ९१ ॥ तावदंबरपथादभिगंतुस्तामनीकधरणीं शमनस्य कासरादहर्धीशतुरंगःकांदिशीकइव
दूरमयासीत् ९२ पाटलीकृतपयोधरपंक्तिःप्रादुरासदनकेरयसंध्या वासरस्यरजनेरपिसीम्नोर्मध्यभागकुरुविंदशिलेव ९३

त् तां अनीकसरणिं युद्धमार्गं अभिगंतुःआगंतुः शमनस्य यमस्य कासरात् महिषात् कांदिशीकइव भयेन पलायितइव दूरं अयासीत् अग
मत् युद्धारंभेसूर्यास्तमयोवभूवेतिभावः ॥ ९२ ॥ अथसूर्यास्तानंतरं शनैकैःपाटलीकृता रक्तीकृतापयोधरपंक्तिर्यस्याःसा संध्यावासरस्यदिव
सस्यरजनेश्च सीम्नोमध्यभागे कुरुविंदशिलेव माणिक्यशिलेव प्रादुरासप्रादुर्बभूव ॥ ९३ ॥ ॥ ७ ॥ ॥ ७ ॥

सासंध्या समरे युद्धे भटौघः याधसमूहः बिंबं विभिंद्यात् इतिभीतिभरात् विद्रवता पलायमानेन विवस्वता सूर्येण वियत्स्थले आकाशे विसृष्टा त्यक्ता अग्नये दत्ता दीप्तिरिव बभौ सूर्योस्तसमयेस्वदीप्तिं अग्नौ निधाय गच्छति पुनः प्रातःकाले तां गृह्णातीत्यागमः द्वाविमौ पुरुषौ लोके सूर्यमंडलभेदिनौ परिव्राड्योगयुक्तश्च रणेचाभिमुखो हत इति भारते॥ ९४॥ नभःपयोधेः आकाशसमुद्रस्य नवविद्रुमाणां नूतनप्रवालरत्नानां श्रीरि

संध्याबभौसासमरेभटौघोबिंबंविभिंद्यादितिभीतिभारात् विवस्वताविद्रवताविसृष्टादिवस्थलेदीप्तिरिवाग्निदत्ता॥ ९४ ॥नभःपयोधेर्नवविद्रुमश्रीःक्रमेणसंध्याकृशिमानमागात् उद्यत्प्रकोपैरुभयैरनीकैर्विभज्यनीतेवविलोचनानि ॥ ९५॥ ध्वजिनीजनितंरजोंधकारंत्वरितंबांधवकौतुकातिरेकात् परिरब्धमिवांधकारसंघःपरमार्थोरणचत्वरंजगाहे॥ ९६॥ ॥

वश्रीः शोभायस्याः सा संध्या उद्यन् प्रकोपः क्रोधो येषां तैः उभयोः विराटसुशर्मणोः अनीकैः सैन्यैः विभज्य विभागं कृत्वा विलोचनानि नेत्राणि प्रतिनीतेव क्रमेण कृशिमानं कृशत्वं आगात् अगमत् कोपेन नयनेषु रक्ततायासियमुत्प्रेक्षा॥ ९५ परमार्थः रात्रिजन्यः सत्यः अंधकारसंघः ध्वजनीभ्यां सेनाभ्यां जनितं उत्पादितं रजसां धूलीनां अंधकारं बांधवस्य स्वज्ञातेः कौतुकातिरेकात् कौतुकातिशयात् परिरब्धुमिव आलिंगितुमिव त्वरितं रणचत्वरं रणांगणं जगाहे प्रविवेश॥ ९६॥ ॥७॥ २१

तत्र रणांगणे एकेषु पत्रिषु पक्षान्संकोच्य संविशत्सु प्रविशत्स्वपि अपरे अन्ये पत्रिणः पक्षान् विस्तार्य विचेरुः जग्मुः इत्याश्चर्यं पत्रिणः पक्षिणः बा
णप्रहारभयेन पक्षान् संकोच्य विचेरुः अपरे पत्रिणः बाणाः प्रहारभयाभावात् पक्षान् विस्तार्य विचेरुः इति साश्चर्यपरिहारः ॥ ९७॥ तत्र युद्धे सकले कं
ककुले गृध्रसमूहे शरवर्षभयेन दूरंगते सत्यपि भीमः भयंकरः पक्षयोः पातः चालनं तेन भीमस्य यः पक्षपातः साहाय्यं तेन च सहितः अत एव प्रमदं

संकोच्य पक्षानेकेषु संविशत्स्वपि पत्रिषु विस्तार्य पक्षानपरे विचेरुस्तत्र पत्रिणः ॥ ९७ शरवर्षभयेन तत्र युद्धे सकले कंककुले
गते विदूरं प्रमदं दधदेक एव कंकः परिबभ्राम सभीमपक्षपातः ॥ ९८॥ अन्योन्यपट्टिशविघट्टभवैः स्फुलिंगैराजिस्थ
लेरुधिरकर्दम भाजि योधाः आगामिनीषु समितिष्वधिकं विधातुमासन्प्रतापनवबीजमिवावपंतः ॥ ९९॥ ॥

दधत् एक एव कंकः युधिष्ठिर परिबभ्राम ॥ ९८॥ योधाः प्रतापस्य नवं स्फुलिंगरूपं बीजं आगामिनीषु समितिषु संग्रामेषु अधिकं विधातुं कर्तुं रु-
धिरमेव कर्दमः तद्भाजि तद्युक्ते आजिस्थले रणांगणे अन्योन्येषां पट्टिशानां खड्गसदृशायुधानां विघट्टात् प्रहारात् भवः उत्पत्तिर्येषां तैः स्फुलिंगैः अ
ग्निकणैः आवपंत इव आसन् अन्यः कर्षकोपि व्रीह्यादिबीजं अधिकं विधातुं कर्दमवत्यां भूमौ आवपति ॥ ९९॥ ॥ ७॥ ॥ ७॥

स्फराणांमृगाक्ष्यः अप्सरसः नवेषुयुद्धमरणभूतेषुवीरस्फरेषुनलिनीशबिंबपथेनसूर्यबिंबमार्गेणचारंगमनं अलब्ध्वा नभसिआकाशेऽभ्रमत्स्फस
स्फकरपल्लवौपरिनिपीड्य घर्षित्वा अयंस्त्रीस्वभावः नक्तंकलहायरात्रियुद्धाय अशापंतशापंददुः युद्धे अभिमुखंहतस्य सूर्यबिंबभेदेन स्वर्गगम
नात् रात्रौतद्बिंबाभावात् स्वर्गगमनाभावेनवरणाभावात् अप्सरसांसंतापइतिभावः ॥१००॥ प्रकीर्णैः सर्वतःप्रसृतैः रक्तकणैः रक्तबिंदुभिःरज्यंतः
पटाः वस्त्राणियस्याः सा हैमीसौवर्णीरथकेतूनांराजिः पंक्तिः युद्धस्य अद्भुतंवृत्तांतं आकर्ण्य द्रष्टुं अर्धमार्गात् निवृत्ताचरमा सायंकालिकासंध्येव र-

नलिनीशबिंबपथचारमलब्ध्वानभसिभ्रमत्स्फनववीरस्फरेषु करपल्लवौपरिनिपीड्यमृगाक्ष्यःकलहायनक्तम
शपंतस्फराणां॥१००॥ रराजहैमीरथकेतुराजीरज्यत्पटारक्तकणैःप्रकीर्णैः आकर्ण्ययुद्धाद्भुतमर्धमार्गाद्द्रष्टुंनिवृत्ताचर
मेवसंध्या १ग॰ तत्रतावदरिशूरनिकृत्तमत्तगजसप्तिकुलपत्तिनवरक्तसिक्तंरणचत्वरमनुभूयभूयसारोषेणसंवर्तसम
वर्तिसममूर्तिर्हृदिनर्तितधूर्तधार्तराष्ट्रशासनवार्तस्त्रैगर्तःकैवर्तइवमत्स्यचक्रवर्तिनमाहर्तुंमुहूर्तादुपावर्तत॥ २३॥

राज १॥ ग॰ तत्रसायंकालेतावत् अरिशूरैःनिकृत्ताःछिन्नाःमत्तगजाश्वसप्तिकुलं अश्वसमूहश्चपत्तयःपदाश्वतेषांनवरक्तेनसिक्तंरणचत्वरंरणांगणं अनुभूय
दृष्ट्वाभूयसाबहुतिशयेन अमर्षेणक्रोधेनसंवर्तसमवर्तिनाप्रलयकालसंबंधियमेनसमामूर्तिर्यस्यसः हृदिमनसिनर्तिताधूर्तस्यशठस्यधार्तराष्ट्रस्यदुर्यो
धनस्यशासनवार्ता आज्ञावार्तायेनसः त्रैगर्तःसुशर्माकैवर्तइवधीवरइवमत्स्यचक्रवर्तिनंमत्स्यदेशराजंविराटंमत्स्यश्रेष्ठंच आहर्तुंधृत्वा आनेतुंमुहूर्तात् उपावर्ते
तस्समीपमगमत्॥ २३॥

प॰ अयमानिनां अचरमः प्रथमः सुशर्मा झटितिसंमुखः सन् अनीकपयोधेः सेनासमुद्रस्य मध्यवर्तिनं रिपुं विराटं ज्ययामौर्व्याबंधं अनैषीत् नीतवान् अपत्रपया परस्मात् लज्जया च बंधं अनैषीत् युक्तमकार्षीदित्यर्थः ॥ २॥ युधि भूपे विराटे पराभवपदे पराजयस्थाने सति धर्मसूनोः भ्रूवल्लिकंपकलिकां अवतंसयन् शिरसि धारयन् भ्रूकंपसूचितां सुशर्मणः सकाशात् राजमोचनरूपाज्ञां मानयन्नित्यर्थः सः मरुतः कुमारः भीमः बलानि शत्रु

मानिनामचरमोथसुशर्मामध्यवर्तिनमनीकपयोधेः संमुखोझटितिबंधमनैषीत्सज्ज्ययारिपुमपत्रपयाच ॥ २॥ भूपेपराभवपदेयुधिधर्मसूनोर्भ्रूवल्लिकंपकलिकामवतंसयन्सः मथ्नन्बलानिरिपवेमरुतःकुमारोमात्स्यंविमुच्यविततारदशांतदीयां ॥ ३॥ विराटसैन्येषुमिषत्सुयुद्धेत्रिगर्तनेतुर्दृढबंधनाय कोदंडयुक्तोगुणएवतत्रकर्ताचजज्ञेकरणंचजज्ञे ॥ ४॥

सैन्यानि मथ्नन् दर्पयन् मात्स्यं विराटं विमोच्य रिपवे सुशर्मणे तदीयां विराटीयां दशां मौर्व्याबंधनरूपावस्थां विततार ददौ विराटं विमोच्य सुशर्माणंमौर्व्याबबंधेत्यर्थः ॥ ३॥ युद्धे विराटसैन्येषु मिषत्सु पश्यत्सु सत्सु त्रिगर्तनेतुः सुशर्मणः दृढबंधनाय तत्र बंधनक्रियायां कोदंडयुक्तः गुण एव कर्ता जज्ञे करणं च जज्ञे बल्लवो मौर्व्या सुशर्माणं बबंधेत्यर्थात् गुणः बल्लवो भीमः कर्ता जातः गुणः मौर्वी करणं जातेति भावः सूदा औदनिका गुणा इत्यमरः ॥ ४॥ ॥ ७॥

चं·भा· तस्यांनिशायां तमसां कदंबकं वृंदंतु यथादृशो र्मीलनोन्मीलनयोः समानरूपं दर्शनाभावरूपंफलंसंददौतथातमसानेत्राणांमीलनोन्मीलनयोर्दर्शनाभावःतथायु टी·क·
२२ द्धेनमात्स्यसुशर्मणोर्बंधनंबभूवेतिभावः॥ ५॥ वायुभुवाभीमेनविमानितः अपमानितः दयालुना धर्मभुवा विराटतः विमोचितःसः सुशर्मातयार ६
जन्येव सामिशेषया अर्धशेषया ध्वजिन्यासेनयासमं यथागतं तथानिरगात् निर्जगाम सुशर्मानिशीथादुपरि अर्धावशिष्टसैन्येनसह येनमार्गेणा
गतस्तेनैव मार्गेण अगामेत्यर्थः॥ ६॥ व्याकृत्तं छिन्नं शीर्षमेव करकः कमंडलुर्यस्यसः विमलानि अस्थीन्येव दंताः यस्यसः रक्तह्रदा एव अंशु

तस्यांनिशायांतुतमःकदंबकंनिमीलनोन्मीलनयोर्दृशांयथा युद्धंतयोर्मात्स्यसुशर्मणोस्तथासमानरूपंफल
मेवसंददौ॥ ५॥ विमानितोवायुभुवाविराटतोविमोचितोधर्मभुवादयालुना तयारजन्येवससामिशेषयासमं
ध्वजिन्यानिरगाद्यथागतं॥ ६॥ व्याकृत्तशीर्षकरकोविमलास्थिदंतोरक्तह्रदांशुकधरोरथकेतुदंडः सेनाक्षधृ
ग्धृतशमःस्वयमाजिरंगःकंकादिवापचरमाश्रमसंप्रदायं॥ १०७॥ ॥ ॥ ॥ ॥

कानिरक्तवस्त्राणि तेषांधरः धर्ता रथकेतुरेव दंडः वेणुदंडोयस्यसः सेनायाः अक्षान् रथावयवविशेषान् रुद्राक्षांश्च धृष्णोति धरतीति सेनाक्ष
धृक् धृतः शमः युद्धावसाने शांतिर्येनसः आजिरंगः रणरंगः स्वयंकंकात् युधिष्ठिरसकाशात् चरमाश्रमस्य संन्यासाश्रमस्य संप्रदायं अवापेव- २२
अन्योपिसंन्यासिनःसकाशात् चतुर्थाश्रमदीक्षांगृहीत्वा तदुपदिष्टदंडकमंडल्वादिपदार्थसंपादनंकरोति॥ १०७॥ ॥ ७॥ ॥ ७

॥गद्यं॥ तदनु शत्रुसेनागमनानंतरं मुहुर्मुहुः केवलं चललमेव बल्लवमेवं अवलोकमानाचलमानागंत्री बलशासनदिशायां ओजायमानेन ओज-
स्वीयाचरतातेजस्विनेत्यर्थः चंद्रमसा प्रसूते प्रकटीकृते. मदकरटिघटायाः मदयुक्तगजसमूहस्य विषाणांगणेषु दंतचत्वरेषु प्रतिफलनेन प्रतिबिं-
बनेन शतगुणिताः धवलिमवीचयः शुभ्रतोर्मयो येषां तैः मरीचिभिः चंद्रिकाभिः दलितानाशितारणविमर्दश्रमदुर्दशायुद्धसंमर्दश्रमात्मकदुर्द-
शायस्याः सा विराटस्य चमूरपि प्रतिनिवर्तने वेगो यस्य तच्चतत् हर्षमाणं यत् गोधनं गवां वृंदं तस्य पयसः क्षीरस्य स्रवनधाराणां क्षरणधाराणां पा-

॥गद्यं॥ तदनु मुहुर्मुहुर्वललमेव केवलमवलोकमानाचलमाना बलशासन दिशायामोजायमानेन चंद्रमसा प्र
सूतैर्मदकरटिघटाविषाणांगणप्रतिफलनशतगुणितधवलिमवीचिभिर्मरीचीभिर्दलितरणविमर्दश्रमदुर्दशावि
राटस्य चमूरपि प्रतिनिवर्तनवेगहर्षमाणगोधनपयःस्रवनधारापातशीतलितसिकतायां पदव्यां पक्ष्मपंक्तिनिमी
लनेन समरभूरेणुभारेण लोचनयोर्निमीलनशिल्पकल्पितबहुसाहाय्यकसुद्र्यानिद्रयातां यामिनीं पाश्चा
र्धसीमामत्यवीवहत् ॥२५॥ तैः शीतलिता शीतलीकृता शर्करा यस्यां तस्यां पदव्यां मार्गे निद्रयातां यामिनीं रात्रिं पश्चा
र्धसीमानं उत्तरार्धावसानं अत्यवीवहत् प्रापयामास विराटचमूः मार्गे विशिष्टां रात्रिं निद्रयाप्यापयामासेत्यर्थः कथंभूतया निद्रया पक्ष्मपंक्ति-
षु निमीलनेन स्थितेन समरभुवः रणभूमेः रेणुभारेण धूलिसमूहेन लोचनयोः निमीलनशिल्पे निमीलनक्रियायां कल्पिता कृता बहुसाहायक

मुद्रासहायत्वं यथातयानिद्रया पक्ष्मनिमीलनं भवति तत्र रेणुभारेण सहायत्वं कृतमिति भावः॥ २४॥ ॥ इत्यनंतभट्टकृतचंपूभा
रतटीकायां श्रीखंडोपाध्यबाजीरायात्मजनारायणसूरिकृतायां षष्ठस्तबकः॥ ६॥ ॥छ॥ ॥श्रीकृष्णायनमः॥ ॥छ॥ ॥छ॥

